**मात्मान्तरश्रवणेऽपि पक्षे प्रवृत्तिः स्यादित्यद्वैतात्मपरवेदान्तश्रवणे नियमविधिरयमस्तु, इहात्मशब्दस्य ‘इदं सर्वं**

---

न्यायसांख्यादिशास्त्रविचारेऽपि कदाचित्प्रवर्तेत, तत्रापि तदभिमतयोजनया वेदान्तविचारसत्त्वात् । न च सांख्यादितर्कशास्त्रगतात्मविचारस्याद्वितीयात्मविचाररूपत्वाभावेन तादृशात्मनि वेदान्ततात्पर्यभ्रमसंशयाद्यनिवर्तकत्वाद्विशिष्य स्वयमेव तत्र तात्पर्यभ्रमादिहेतुत्वाच्च न तत्रात्मज्ञानार्थिनः प्रवृत्तिः संभवतीति वाच्यम् । जीवभिन्नपरमात्मज्ञानं मुक्तिसाधनमिति भ्रमेण तत्रापि प्रवृत्तिसंभवात् । न च साङ्गाध्ययनवतो भिन्नात्मज्ञानं मुक्तिसाधनमिति भ्रमो न संभवति ‘अहं ब्रह्मास्मि’ ‘ब्रह्मविदाप्नोति परम्’ इत्यादिवेदान्तेषु जीवाभिन्नपरमात्मज्ञानस्यैव मुक्तिसाधनत्वप्रतीतेरिति वाच्यम् । ‘जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः’ इति श्रुतिगतान्यशब्देन भ्रमसंभवात् । यदेशं संनिधिमात्रेण बुद्ध्यादिप्रवर्तकमन्यं वस्तुगत्या बुद्ध्यादिभ्यो भिन्नम् । भ्रान्त्या बुद्ध्याद्यभिन्नत्वेन चिदात्मनो गृहीतत्वाद्भिन्नत्वोपदेशः सफलः । न तु जीवभिन्नमित्यर्थः, जीवब्रह्मभेदस्य प्रत्यक्षसिद्धतयोपदेशानपेक्षत्वात् । जुष्टमृषिसंघैः सेवितम्, ‘ऋषिसंघजुष्टम्’ इति श्रुत्यन्तरात् । पश्यतीशोऽहमिति साक्षात्करोति । तदास्येशस्य महिमानं महत्त्वोपलक्षितं स्वरूपमित्येति प्राप्नोति, वीतशोकश्च भवतीति श्रुतेर्वास्तवोऽर्थः । ननु श्रोतव्यवाक्य आत्मविचारमात्रं प्रतीयते न त्वद्वैतात्मविचारः, ततश्च कथमनेन विधिना भिन्नात्मविचारव्यावृत्तिलाभ इत्यत आह— **इहेति** ।

**यद्यमात्मा' इत्यादिप्रकरणपर्यालोचनयाद्वितीयात्मपरत्वात् । न हि वस्तुसत्साधनान्तरप्राप्तावेव नियमविधिरिति कुलधर्मः, येन वेदान्तश्रवणनियमार्थवत्त्वाय**

---

अत्रादिपदेन 'आत्मनि दृष्टे सर्वं विदितं भवति' इति प्रतिज्ञावाक्यं गृह्यते । आत्मनः सर्वाधिष्ठानतया सर्वात्मकत्वे हि सत्यात्मनि विदिते तद्व्यतिरिक्तं सर्वं तत्त्वतो विदितं भवति, सर्वमात्मैवेति सामानाधिकरण्यं च सिध्यति, नान्यथा । तथा च श्रोतव्यवाक्यस्थमात्मपदमद्वितीयात्मपरमेवेति तद्विचारविधिना भिन्नात्मविचारव्यावृत्तिर्लभ्यत इति भावः । ननु तण्डुलनिष्पत्तावव‍हननस्येव नखविदलनादेरपि वस्तुतः साधनत्वात्तन्निवृत्तिफलको नियमविधिर्युक्तः । इह त्वद्वितीयब्रह्मसाक्षात्कारे भिन्नात्मविचारस्य न वस्तुतः साधनत्वमस्ति । अतस्तन्निवृत्तिफलको नियमविधिर्न युज्यते । न च मा भूद्भिन्नात्मविचारस्य व्यावर्त्यत्वम् ; नैतावता नियमविध्यनुपपत्तिः प्रकृतेऽस्ति, गुरुनिरपेक्षविचारभाषाप्रबन्धेतिहासपुराणादीनामुदाहरिष्यमाणानां सत्तानिश्चयरूपब्रह्मसाक्षात्कारहेतुत्वसत्त्वेन व्यावर्त्यत्वसंभवादिति वाच्यम् । तेषामप्यनन्तरमेव वक्ष्यमाणरीत्याविद्यानिवर्तकसत्तानिश्चयरूपसाक्षात्कारप्रतिबन्धककल्मषनिवृत्तिद्वारा गुर्वधीनवेदान्तविचारवत्साक्षात्काराहेतुत्वेन वस्तुतः साधनत्वाभावात् । तथा च न नियमविधिः संभवतीत्याशङ्क्याह— **न हीति** । **कुलधर्म इति** । कुलक्रमागतधर्मस्य यथावश्यिकता, तथा वस्तुसत्साधनान्तरप्राप्तेरावश्यिकत्वं न हीत्यर्थः । **येनेति** । आवश्यिकत्वेनेत्यर्थः । **नियमार्थवत्त्वायेति** ।

नियमाद्दृष्टजन्यस्वप्रतिबन्धककल्मषनिवृत्तिद्वारा सत्तानिश्चयरूपब्रह्मसाक्षात्कारस्य वेदान्तश्रवणैकसाध्यत्वस्याभ्युपगन्तव्यत्वेन तत्र वस्तुसत्साधनान्तराभावान्न नियमविधिर्युज्यत इत्याशङ्क्येत । किं तु यत्र साधनान्तरतया संभाव्यमानस्य पक्षे प्राप्त्या विधित्सितसाधनस्य पाक्षिक्यप्राप्तिर्निवारयितुं न शक्यते तत्र नियमविधिः, तावतैवाप्राप्तांशपरिपूरणस्य तत्फलस्य सिद्धेः । अथ वा गुरुमुखाधीनादिव निपुणस्य स्वप्रयत्नमात्रसा-

---

विधित्सितगुर्वधीनवेदान्तश्रवणेनेव गुरुनिरपेक्षविचारादिनापि सत्तानिश्चयरूपसाक्षात्कारस्वरूपोत्पत्तिसंभवे सति गुर्वधीनवेदान्तश्रवणानियमस्य दृष्टप्रयोजनाभावान्नियमादृष्टमुपेयम् । तस्य च कल्मषनिवृत्तिद्वारा विद्यासाधनत्व च कल्पनीयमेवेत्यर्थः । अदृष्टजन्यत्वं कल्मषनिवृत्तेर्विशेषणम् । स्वपद साक्षात्कारपरम् । **आशङ्क्येतेति** । येनाशङ्क्येतेति संबन्ध । यत्र विधित्सितसाधनस्याप्राप्तिः पाक्षिकी निवारयितुं न शक्यते तत्र नियमविधिरित्यत्र हेतुमाह— **तावतैवेति** । अप्राप्तांशलाभमात्रेणेत्यर्थः । विधित्सितसाधनस्य पाक्षिक्यामप्राप्तौ हेतुमाह— **साधनान्तरतयेति** । सत्तानिश्चयरूपब्रह्मसाक्षात्कारस्य दृष्टफलतया तत्स्वरूपे वेदान्तविचारवद्भाषाप्रबन्धादेरप्यन्वयव्यतिरेकाभ्यामेव साधनत्वबुद्धिः संभाव्यते । पूर्वोक्तरीत्या वस्तुत. साधनत्वासंभवात्संभावनयेत्युक्तम् । व्यावर्त्यान्तरमाह— **अथ वेति** । मात्र-

**भ्यादपि वेदान्तविचारात्संभवति सत्तानिश्चयरूपं ब्रह्मापरोक्षज्ञानम् । किं तु गुरुमुखाधीनवेदान्तवाक्यश्रवणनियमादृष्टमविद्यानिवृत्तिं प्रति कल्मषनिरासेनोपयुज्यत इति तदभावेन प्रतिबद्धमविद्यामनिवर्तयत्परोक्षकल्पमवतिष्ठते । न च ज्ञानोदयेऽज्ञानानिवृत्त्यनुपपत्तिः ।**

---

पदेन गुरुर्व्यवच्छिद्यते । तर्ह्युक्तब्रह्मापरोक्षज्ञानेनैवाविद्यानिवृत्तिलक्षणफलसिद्धेः किं गुर्वधीनश्रवणविधिनेति शङ्कते— **किं त्विति** । श्रवणनियमविध्यर्थवत्त्वाय नियमादृष्टस्य ब्रह्मापरोक्षज्ञानेन स्वफलसिद्ध्यर्थमपेक्षणीयत्वकल्पनान्नोक्तापरोक्षज्ञानादविद्यानिवृत्तिसिद्धिरिति परिहरति— **गुरुमुखेति** । **निरासेनेति** । निरासद्वारेत्यर्थः । इतीत्यनन्तरं कल्पनीयत्वेनेति शेषः । **तदभावेनेति** । कल्मषनिरासाभावेन, कल्मषेणेत्यर्थः । **कल्पमिति** । तुल्यमित्यर्थः । न च नियमार्थवत्त्वायेत्यादिपूर्वग्रन्थे नियमादृष्टस्य कल्मषनिवृत्तिद्वारा ज्ञानोत्पत्तौ हेतुत्वमुक्तम्; अत्र चोत्पन्नेन ज्ञानेनाविद्यानिवृत्तौ जननीयायां तत्र प्रतिबन्धककल्मषनिरासद्वारा श्रवणनियमादृष्टस्य साधनत्वोक्तौ पूर्वापरविरोध इति वाच्यम् । मतभेदेन विरोधाभावात् । नन्वेवमप्युत्पन्ना ब्रह्मविद्या स्वकार्याविद्यानिवृत्तये नियमादृष्टसाध्यां कल्मषनिवृत्तिमपेक्षत इत्ययुक्तम्, प्रमात्वाच्छुक्त्यादिप्रमावदिति मत्वा शङ्कते— **न च ज्ञानोदय इति** । **अनिवृत्त्यनुपपत्तिरिति** । अज्ञाननिवृत्तिरेव स्यादित्यर्थः ।

**प्रतिबन्धकाभावस्य सर्वत्रापेक्षितत्वेन सत्यपि प्रत्यक्षविशेषदर्शने उपाधिना प्रतिबन्धात्प्रतिबिम्बभ्रमानिवृत्तिवत्तदनिवृत्त्युपपत्तेः । एवं च लिखितपाठादिनापि स्वाध्यायग्रहणप्रसक्तौ गुरुमुखाधीनाध्ययननियमविधिवत्स्वप्रयत्नमात्रपूर्वकस्यापि वेदान्तविचारस्य सत्तानिश्चयरूपब्रह्मसाक्षात्कारार्थत्वेन पक्षे प्राप्तौ गुरुमुखाधीन-**

---

शुक्तिप्रमास्थलेऽन्यापेक्षाभावेऽपि प्रतिबिम्बभ्रमस्थले विशेषदर्शनस्य प्रतिबन्धकाभावापेक्षादर्शनेन ब्रह्मविद्याया अपि तदपेक्षोपपत्तिरिति परिहरति— **प्रतिबन्धकाभावस्येति** । यद्यपि प्रतिबन्धकाभावस्य सिद्धान्ते न कुत्रापि हेतुत्वम्, तथाप्यप्रतिबद्धा सामग्री कार्यहेतुरित्युपगमादस्त्येवावच्छेदकतया प्रतिबन्धकाभावापेक्षेति भावः । **तदनिवृत्त्युपपत्तेरिति** । गुरुरहितविचारसाध्यविद्ययाविद्यानिवृत्त्यभावोपपत्तेरित्यर्थः । श्रवणनियमविधिं सदृष्टान्तमुपपादयति— **एवं चेति** । गुरुरहितविचारस्य व्यावर्त्यस्य लाभे सतीत्यर्थः । **लिखितेति** । अभ्युदयनिःश्रेयसकामस्य वेदार्थानुष्ठानं विना नाभ्युदयादिसिद्धिः । तदनुष्ठानं च वेदार्थज्ञानं विना न संभवति । तदर्थज्ञानं च स्वाध्यायपदवाच्यवेदावाप्तिं विना न संभवति । वेदावाप्तिं प्रति च गुरुमुखोच्चारणानूच्चारणलक्षणमध्ययनं लिखितपाठादिश्च साधनत्वेन लोके प्रसिद्धम् । तथा चाध्ययनविधिवाक्येन वेदाध्ययनं नियम्यते— अध्ययनेनैवाक्षरावाप्तिं संपादयेदिति । तेन च लिखितपाठादिव्यावृत्तिर्लभ्यते यथा,

**श्रवणनियमविधिरयमस्तु । न च 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति गुरूपसदनविधिनैव गुरुरहितविचारव्यावृत्तिसिद्धेर्विफलो नियमविधिरिति शङ्क्यम् । गुरूपसदनस्य श्रवणाङ्गतया श्रवणविध्यभावे तद्विधिरेव नास्तीति तेन तस्य वैफल्याप्रसक्तेः । अन्यथाध्ययनाङ्ग-**

---

तथा प्रकृतेऽपीत्यर्थः । ननु ब्रह्मविज्ञानार्थं गुर्वभिगमनं श्रूयते । न च तस्य श्रुतिजन्ये ब्रह्मज्ञाने साक्षात्साधनत्वमस्ति । अतस्तेन ज्ञाने जननीये द्वारापेक्षायां गुर्वधीनविचार एव योग्यतया द्वारत्वेन कल्प्यते न त्वदृष्टम्, दृष्टद्वारसंभवेऽदृष्टकल्पनायोगात् । गुर्वभिगमनस्य गुर्वधीनविचारद्वारा ज्ञानसाधनत्वेऽभिगमनविधिना सिद्धे, तेनैव गुरुरहितविचारव्यावृत्तिसिद्धेर्निष्फलः श्रोतव्यवाक्ये श्रवणनियमविधिरिति शङ्कते— **न चेति** । 'ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन' इति पूर्ववाक्ये निर्दिष्टो ब्राह्मण. स इति परामृश्यते । निर्वेदं वैराग्यं प्राप्नुयादिति यावत् । केन प्रकारेणेत्यत आह श्रुतिः— अकृतो नित्यो मोक्षः कृतेन कर्मणा नास्तीति । अतो मोक्षं ब्रह्मज्ञानसाध्यं ज्ञात्वा तज्ज्ञानार्थं गुरुमभिगच्छेदित्यर्थः । श्रोतव्यवाक्येन गुर्वधीनविचारे नियमिते सति तदङ्गतया गुर्वभिगमनं विधीयते । श्रवणविध्यभावे तूपगमनविधेरात्मलाभाभावान्न श्रवणविधिवैफल्यापादकतेति परिहरति— **गुरूपसदनस्येति** । अङ्गविधिना प्रधानविधिवैफल्यापादनेऽतिप्रसङ्गमाह—**अन्यथेति**।

भूतोपगमनविधिनैव लिखितपाठादिव्यावृत्तिरित्यध्ययननियमो विफलः स्यात्। अथ वाद्वैतात्मपरभाषाप्रबन्धश्रवणस्य पक्षे प्राप्त्या वेदान्तश्रवणे नियमविधिरस्तु। न च 'न म्लेच्छित वै' इत्यादिनिषेधादेव तदप्राप्तिः। शास्त्रव्युत्पत्तिमान्द्याद्वेदान्तश्रवणमशक्यमिति पुरुषार्थनिषेधमुल्लङ्घ्यापि भाषाप्रबन्धेनाद्वैतं जिज्ञासमानस्य तत्रापि

---

**विधिनैवेति**। गुरूपगमनस्याक्षरावाप्तिं प्रत्यध्ययनरूपदृष्टद्वारसंभवे तत्त्यागायोगादिति भावः। व्यावर्त्यान्तरमाह— **अथ वेति**। **नियमविधिरस्त्विति**। अद्वैतं जिज्ञासमानेन वेदान्ता एव विचारणीया न भाषाप्रबन्धा इति विचारविषयनियमविधिरस्त्वित्यर्थः। ननु म्लेच्छशब्दितस्य भाषाप्रबन्धरूपाव्यक्तशब्दस्योच्चारणं पुरुषेण न कर्तव्यम्, अन्यथा पुरुषः प्रत्यवायी भवेदिति निषेधबलादेव श्रवणाधिकारिणो भाषाप्रबन्धव्यावृत्तिसिद्धेः किं विधिनेति शङ्कते— **न च नेति**। यदि भाषानिषेधस्य ज्ञानाङ्गत्वं स्यात्, तदा तन्निषेधमुल्लङ्घ्य तत्र प्रवृत्तौ ज्ञानानुत्पत्तिभयेन तत्र न प्रवर्तेत। न त्वेतदस्ति, पुरुषार्थत्वान्निषेधस्य। तथा च तन्निषेधमुल्लङ्घ्यापि कदाचिद्भाषाप्रबन्धश्रवणे प्रवृत्तिः संभवतीति परिहरति— **शास्त्रव्युत्पत्तीति**। उल्लङ्घने हेतुमाह— **अशक्यमितीति**। अशक्यत्वे हेतुर्व्युत्पत्तिमान्द्यम्। ननु यस्याधिकारिणो व्युत्पत्तिमान्द्याद्वेदान्तश्रवणमशक्यं तं प्रति वेदान्तविचारे नियमविधिः कथम्, अश-

प्रवृत्तिसंभवेन नियमविधेरर्थवत्त्वोपपत्तेः। अभ्युपगम्यते हि कर्त्रधिकरणे व्युत्पादितं पुरुषार्थेऽनृतवदननिषेधे सत्यपि दर्शपूर्णमासमध्ये कुतश्चिद्धेतोरङ्गीकृतनिषेधोल्लङ्घनस्याविकलां क्रतुसिद्धिं कामयमानस्यानृतवदने प्रवृत्तिः स्यादिति पुनः क्रत्वर्थतया दर्शपूर्णमासप्रकरणे 'नानृतं वदेत्' इति निषेध इति क्रत्वर्थनिषेधस्यार्थवत्त्वम्। यद्वा यथा 'मन्त्रैरेव मन्त्रार्थस्मृतिः साध्या' इति नियमस्तन्मूलकल्पसूत्रात्मीयग्रहणकवाक्यादीनामपि

---

क्यार्थे विध्यनुपपत्तेरिति चेत्, न। मन्दस्य भाष्यादिरूपवेदान्तविचारासंभवेऽपि वेदान्तप्रकरणविचारस्य मन्दाधिकारिणोऽपि संभवात्। तदुक्तं पञ्चदश्याम्— 'मन्दप्रज्ञं तु जिज्ञासुमात्मानन्देन बोधयेत्। बोधयामास मैत्रेयी याज्ञवल्क्यो निजां प्रियाम्॥' इति। आत्मानन्दनामकप्रकरणेनेत्यर्थः। पुरुषार्थनिषेधमुल्लङ्घ्यापि महाफलसिद्ध्यर्थं निषिद्धे प्रवृत्तिस्तन्निवर्तनेन विधेरर्थवत्ता च मीमांसकैरपि स्वीकृतेत्याह— अभ्युपगम्यते हीति। अङ्गीकृतं निषेधोल्लङ्घनं येन स तथोक्तः। कुतश्चिदित्यनेन सूचितं हेतुमाह— अविकलामिति। अर्थवत्त्वमिति। व्युत्पादितमिति पूर्वेणान्वयः। व्याख्यान्तरमाह— यद्वेति। मन्त्रैरेवेति। 'अग्निर्मूर्धा—' इत्यादयो मन्त्राः श्रुत्यादिभिः क्रतौ विनियुक्ताः। ते किमुच्चारणमात्रेणादृष्टं कुर्वन्तः क्रतावुपकारं कुर्वन्त्युत दृष्टेनैवार्थस्मरणेनेति संदेहे

पक्षे प्राप्तेः, तथा वेदान्तमूलेतिहासपुराणपौरुषेयप्रब-

कल्पसूत्रादिनाप्यनुष्ठेयाद्यर्थस्मृतिसंभवाददृष्टार्था मन्त्रा इति प्राप्ते, राद्धान्तः—मन्त्राणामर्थप्रकाशनद्वारा क्रतूपकारकत्वम्, दृष्टद्वारसंभवेऽदृष्टद्वारकल्पनानुपपत्तेः। तथा च फलवदनुष्ठानापेक्षितक्रियातत्साधनस्मरणद्वारा मन्त्राणां कर्माङ्गत्वम्। न च क्रियातत्साधनस्मरणस्य मन्त्रैरिव कल्पसूत्रादिभिरपि संभवान्न तस्य द्वारत्वमिति वाच्यम्। 'मन्त्रैरेव मन्त्रार्थः स्मर्तव्यः' इति नियमविधिसंभवात्। नियमस्त्वदृष्टार्थो भविष्यति। तदुक्तम्— 'यत्र दृष्टं न लभ्येत स्यात्तत्रादृष्टकल्पना' इति। तथा च यथा मन्त्रनियमविधिना मन्त्रमूलककल्पसूत्रादिव्यावृत्तिः क्रियते तथाधीतसाङ्गस्वाध्यायेन ब्रह्म जिज्ञासुना वेदान्ता एव विचार्या इति वेदान्तनियमे कृते, तन्मूलकेतिहासादीनां व्यावृत्तिर्लभ्यत इति दृष्टान्तदार्ष्टान्तिकग्रन्थयोरर्थः। याज्ञिकैः प्रणीतमनुष्ठानसमवेतपदार्थसंग्राहकं वाक्यं ग्रहणकवाक्यम्। इतिहासो महाभारतम्। पौरुषेयप्रबन्धः प्रबोधचन्द्रोदयादिः। उदाहृतानि व्यावर्त्यान्युपलक्षणम्, अन्येषामपि व्यावर्त्यानां संभवात्। तथा हि— 'तत्कारणं सांख्ययोगाभिपन्नम्' इति श्रुतौ ब्रह्मप्रतिपत्तिद्वारा तत्प्राप्ति प्रत्युपायद्वयं निर्दिष्टम्— श्रवणमननध्यानात्मकः सांख्यशब्दार्थ एकः, तृतीयपरिच्छेदे वक्ष्यमाणो योगपदोदित उपासनामार्गस्त्वपरः। तत्प्रकृतं कारणं जगत्कारणत्वोपलक्षितं ब्रह्म सांख्ययोगाभ्यां ज्ञानद्वाराभिपन्नमाभिमुख्येन प्रत्यक्त्वेन प्राप्तमिति श्रुत्यर्थः। तथा सगुणब्रह्मोपासनमुपासकस्य

न्धानामपि पक्षे प्राप्तिसंभवान्नियमोऽयमस्तु । सर्वथा नियमविधिरेवायम् । 'सहकार्यन्तरविधिः—' इत्यधिकरणभाष्येऽपूर्वविधित्वोक्तिस्तु नियमविधित्वेऽपि पाक्षिकाप्राप्तिसद्भावात्तदभिप्रायेति तत्रैव पक्षेणेति पाक्षिकाप्राप्तिकथनपरसूत्रपदयोजनेन स्पष्टीकृतमिति विवरणानुसारिणः ॥

कृतश्रवणस्य प्रथमं शब्दान्निर्विचिकित्सं परोक्षज्ञान-

---

ब्रह्मलोकं गतस्य तत्त्वसाक्षात्कारद्वारा ब्रह्मप्राप्तिहेतुरिति ब्रह्ममीमांसायां प्रसिद्धम् । तथा तपोविशेषादिकं साक्षात्तत्त्वज्ञानसाधनत्वेन पुराणादिप्रसिद्धमुदाहर्तव्यम् । तथा च गुरुवेदान्तेषु श्रद्धावतः कुशलस्य श्रवणाधिकारिणस्तत्त्वज्ञानार्थमुक्तेषु योगमार्गसगुणब्रह्मोपासनतपोविशेषादिष्वपि वेदान्तश्रवण इव कदाचित्प्रवृत्तिः स्यादिति तन्निवृत्तिफलको नियमविधिः संभवति । नियमविधिपक्षमुपसंहरति— **सर्वथेति** । ननु नियमविधित्वपक्षे 'सहकार्यन्तरविधिः—' इत्यधिकरणभाष्यविरोध इत्यत आह—**सहकार्यन्तरेति** । अपूर्वविधित्वस्य निराकृतत्वादिति भावः । **तत्रैवेति** । तदधिकरणभाष्य एवेत्यर्थः ॥

श्रोतव्यवाक्येन निर्विचिकित्सपरोक्षशाब्दज्ञानोद्देशेनैव श्रवणं विधीयते न तु शाब्दसाक्षात्कारोद्देशेन, शब्दस्य स्वतः परोक्षज्ञानजननस्वाभाव्याद्विचारसहकृतस्यापि शब्दस्य क्वापि साक्षात्कार-

मेवोत्पद्यते, शब्दस्य परोक्षज्ञानजननस्वाभाव्येन क्लृप्त-
सामर्थ्यानतिलङ्घनात्। पश्चात्तु कृतमनननिदिध्यासनस्य
सहकारिविशेषसंपन्नात्तत एवापरोक्षज्ञानं जायते। तत-
स्तत्तांशगोचरज्ञानजननासमर्थस्यापीन्द्रियस्य तत्समर्थ-
संस्कारसाहित्यात्प्रत्यभिज्ञानजनकत्ववत्स्वतोऽपरोक्षज्ञा-

---

हेतुत्वादर्शनाच्च। परोक्षज्ञानफलकोऽप्ययं नापूर्वविधिः, विधि त्रि
नापि शब्दे शाब्दज्ञानहेतुत्वस्य विचारे विचार्यनिर्णयहेतुत्वस्य
च प्राप्तौ तदुभयबलेन विचारविशिष्टवेदान्तरूपश्रवणस्य निर्वि-
चिकित्सशाब्दज्ञानहेतुत्वप्राप्तेः साधितत्वात्। किं तु पूर्वोक्तान्येत्र
व्यावर्त्यान्यादाय नियमविधिरेवेति मतमाह— **कृतश्रवणस्य प्रथ-
ममिति**। ननु मनननिदिध्यासने किं निर्विचिकित्सशाब्दपरोक्ष-
ज्ञानोद्देशेनैव विधीयेते किं वा शाब्दापरोक्षं प्रति। नाद्यः, मनना-
द्यनुष्ठानात्प्राक्छ्रवणमात्रादेव तत्सिद्धेः। न द्वितीयः, शब्दस्य परोक्ष-
ज्ञानजनन एव सामर्थ्यस्य त्वदभिमतत्वादित्याशङ्क्य द्वितीयपक्षप-
रिग्रहेण परिहरति— **पश्चादिति**। शाब्दनिर्विचिकित्सपरोक्षज्ञानान-
न्तरमित्यर्थः। कृते मनननिदिध्यासने येन स तथोक्तः। **तत एवेति**।
शब्दादेवेत्यर्थः। सहकारिवैचित्र्यात्कार्यवैचित्र्यदर्शनादिति भावः।
तदेवोदाहरणेन दर्शयति— **तत्तांशेति**। **तत्समर्थेति**। तत्तांश-
गोचरज्ञानजननसमर्थेत्यर्थः। **शब्दस्येति**। शब्दस्यापरोक्षज्ञानज
नकत्वं युक्तमित्युत्तरत्र संबन्धः। ननु तत्तासंस्कारस्येन्द्रियसह-

नजननासमर्थस्यापि शब्दस्य विधुरपरिभावितकामिनी-साक्षात्कारस्थलेऽन्तःकरणस्येव तत्समर्थत्वेन क्लृप्तभावनाप्रचयसाहित्यादपरोक्षज्ञानजनकत्वं युक्तम्। ततश्च शब्दस्य स्वतः स्वविषये परोक्षज्ञानजनकत्वस्य भावनाप्रचयसहकृतज्ञानकरणत्वावच्छेदेन विधुरान्तःकरणवदप-

---

कारित्वेन क्लृप्तावपि भावनाप्रचयस्य ज्ञानकरणसहकारित्वेन साक्षात्कारजननसामर्थ्यं न क्वापि क्लृप्तमित्याशङ्क्याह— **विधुरेति**। **अन्तःकरणस्येवेति**। अन्तःकरणस्य बाह्यपदार्थरूपकामिनीगोचरसाक्षात्कारासमर्थस्यापि कामिनीगोचरभावनाप्रचयसहकृतस्य कामिनीसाक्षात्कारहेतुत्ववदित्यर्थः। तत्समर्थत्वेनेत्यत्र साक्षात्कारजनन तच्छब्दार्थः। नन्वेवमपि शब्दसहकारित्वेन मननध्यानात्मकभावनाप्रचयस्य मानान्तरेण शाब्दसाक्षात्कारं प्रति हेतुत्वाप्राप्तेर्मननादिविधेरपूर्वविधित्वप्रसङ्ग इति, नेत्याह—**ततश्चेति**। परोक्षज्ञानजनकत्वस्यापरोक्षज्ञानजनकत्वस्य च प्राप्तत्वादिति संबन्धः। परोक्षज्ञानहेतुत्वस्य प्राप्त्यभिधानं श्रवणविधेर्नियमविधित्वार्थमिति द्रष्टव्यम्। **विधुरेति**। भावनासहकृतस्य विधुरान्तःकरणस्य कामिनीसाक्षात्कारहेतुत्वदर्शनस्थले बहिरस्वतन्त्रमप्यन्तःकरणं बाह्यवस्तुभावनासहकृतं सत्तत्साक्षात्कारहेतुरिति विशिष्य कार्यकारणभावे ग्रहीतव्ये लाघवाद्बाधकाभावाच्च भावनाप्रचयसहकृतं ज्ञानकरणत्वावच्छिन्नमपरोक्षज्ञानं प्रति हेतुरिति कार्यकारणभावो गृह्यत इति भावः। अत्र शब्दस्य परोक्षज्ञानजननस्वाभाव्य-

रोक्षज्ञानजनकत्वस्य च प्राप्तत्वान्पूर्ववन्नियमविधिरिति तदेकदेशिनः ॥

**वेदान्तश्रवणेन न ब्रह्मसाक्षात्कारः किं तु (मनसैव), 'मनसैवानुद्रष्टव्यम्' इति श्रुतेः 'शास्त्राचार्योपदेशशमादिसंस्कृतं मन आत्मदर्शने करणम्' इति गीताभाष्यवच-**

---

मेवासिद्धम्, ज्ञानगतपरोक्षत्वादे करणविशेषप्रयुक्तत्वस्य निराकरिष्यमाणत्वात् । अत. शाब्दापरोक्ष प्रति मननादेरिव श्रवणस्यापि विधिर्नानुपपन्न इत्यस्वरस सूचयति— **तदेकदेशिन इति** । विवरणैकदेशिन इत्यर्थ. ॥

मतान्तरमाह— **वेदान्तश्रवणेन न ब्रह्मसाक्षात्कार इति** । शब्दस्य परोक्षज्ञानजननस्वाभाव्येन क्लृप्तसामर्थ्यानतिलङ्घनादिति हेतुरत्रापि मते द्रष्टव्य. । किं तर्हि ब्रह्मसाक्षात्कारे करणमिति पृच्छति— **किं त्विति** । मन एव करणमिति मन्वानस्तत्र मानमाह— **मनसैवेति** । क्वचित्किं त्वित्यनन्तरं मनसैवेति पाठोऽपि पृथगस्ति । तदा नानुपपत्तिः । तत्रैव भाष्यसंमतिमाह— **शास्त्रेति** । शास्त्रं तत्त्वमस्यादिवाक्यम् । अचार्योपदेश आचार्यकर्तृकवाक्यार्थविवरणरूप । आदिपदं दमतितिक्षादिसंग्रहार्थम् । तथा चात्र ब्रह्मसाक्षात्कारस्य मानसत्वप्रतिपादनेन तत्करणमनःसहकारितयैव मनननिदिध्यासनयोर्विधिः, न तु पूर्वमत इव शाब्दसाक्षात्कारकरणशब्दसहकारितयेति पूर्वमता-

**नाच्च । श्रवणं तु निर्विचिकित्सपरोक्षज्ञानार्थमिति ताद-र्थ्येनैव नियमविधिरिति केचित् ॥**

**अपरोक्षज्ञानार्थत्वेनैव श्रवणनियमविधिः, 'द्रष्टव्यः' इति फलकीर्तनात् । तादर्थ्यं च तस्य करणभूतमनःस-हकारितयैव न साक्षात्, शब्दादपरोक्षज्ञानानङ्गीकारात् । न च तस्य तेन रूपेण तादर्थ्यं न प्राप्तमित्यपूर्वविधित्व-**

---

दस्य मतस्य विशेषः सूचितो भवति । श्रवणे तु पूर्वमतादविशेष-माह— **श्रवणं त्विति । तादर्थ्येनैवेति** । निर्विचिकित्सशा-ब्दपरोक्षज्ञानार्थत्वेनैवेत्यर्थः ॥

मतान्तरमाह— **अपरोक्षेति** । ननु तर्करूपविचारात्मकस्य श्रवणस्य स्वतः साक्षात्कारहेतुत्वायोगात्तदनुग्राह्यं प्रमाणं वक्त-व्यम् । तच्च किमित्यपेक्षायामाह— **तादर्थ्यं चेति** । साक्षात्का-रार्थत्वं चेत्यर्थः । **तस्येति** । वेदान्तश्रवणस्येत्यर्थः । **करणभू-तेति** । ब्रह्मसाक्षात्कारकरणभूतेत्यर्थः । न तु ब्रह्मसाक्षात्कारक-रणशब्दसहकारितयेत्येवकारार्थः । **न साक्षादिति** । वेदान्तश्रव-णस्य साक्षात्स्वातन्त्र्येण साक्षात्कारजनकत्वं नास्ति, तस्य तर्क-रूपतया स्वतः प्रमाणत्वाभावादिति भावः । मनःसहकारितयैवे-त्येवकारार्थे हेतुमाह— **शब्दादिति । तस्येति** । वेदान्तश्रवणस्ये-त्यर्थः । **तेन रूपेणेति** । साक्षात्कारकरणमनःसहकारित्वेन रूपेणेत्यर्थः । साक्षात्कारकरणमनःसहकारित्वेन प्राप्त्यभावेऽपि

**प्रसङ्गः। श्रावणेषु षड्जादिषु समारोपितपरस्पराविवेकनिवृत्त्यर्थगान्धर्वशास्त्रश्रवणसहकृतश्रोत्रेण परस्परासंकीर्णतद्याथार्थ्यापरोक्ष्यदर्शनेन प्रकाशमाने वस्तुन्यारोपिताविवेकनिवृत्त्यर्थशास्त्रसद्भावे तच्छ्रवणं तत्साक्षात्कारजनकेन्द्रियसहकारिभावेनोपयुज्यत इत्यस्य क्लृप्तत्वादित्यपरे॥**

---

तत्करणेन्द्रियसहकारित्वेन प्राप्तिरस्तीत्याह— **श्रावणेष्विति।** श्रोत्रजन्यप्रत्यक्षविषयेष्वित्यर्थः। **षड्जादिष्विति।** षड्जादयो ध्वनिविशेषाः। तेषु गान्धर्वशास्त्रश्रवणरहितस्य परस्परमविवेकः समारोपितो वर्तते। परस्परमविवेको नाम परस्परतादात्म्यरूपः परस्परधर्मवत्तारूपश्चेति बोध्यम्। गान्धर्वशास्त्रविचारवतश्च तद्विचारसहकृतश्रोत्रेन्द्रियेणैव षड्जादयः परस्पर विविक्ततयानुभूयन्ते। एवं मनसान्तरिन्द्रियेणानुभूयमानेषु चिदात्मन. प्राणशरीरादिषु परस्परं तादात्म्यादिरूपाविवेकः प्राणिनामनुभवसिद्धः। अत्रापि यद्यारोपनिवर्तक शास्त्रमस्ति, तदा तत्सहकृतमन्तरिन्द्रियमेव बुद्ध्यादिविविक्तमात्मानं ब्रह्मस्वरूपतया वेदान्तैः प्रतीयमानं साक्षात्कारयेदिति विचारवान्पुरुषः षड्जादिसाक्षात्कारस्थले कार्यकारणभावं कल्पयतीत्याह— **प्रकाशमान इति।** तच्छ्रवणं शास्त्रश्रवणम्। **तत्साक्षात्कारेति।** प्रकाशमानवस्तुसाक्षात्कारेत्यर्थः। उपयुज्यते विविक्ततया वस्तुसाक्षात्कारहेतुर्भवतीत्यर्थः। **इत्यस्येति।** इत्युक्तप्रकारेणास्य साक्षा-

**वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्यनिर्णयानुकूलन्यायविचारात्मकचेतोवृत्तिविशेषरूपस्य श्रवणस्य न ब्रह्मणि परोक्षमपरोक्षं वा ज्ञानं फलम्, तस्य शब्दादिप्रमाणफलत्वात्। न चोक्तरूपविचारावधारिततात्पर्य-**

---

त्कारकरणभूतेन्द्रियसहकारित्वस्य वेदान्तश्रवणे विधि विनैव प्राप्तत्वान्नापूर्वविधित्वप्रसङ्ग इत्यर्थः ॥

उक्तेषु पक्षेषु शाब्दाद्यापरोक्ष्योद्देशेन वा शाब्दपरोक्षोद्देशेन वा श्रवणविधिरिति स्थितम्। इदानी प्रतिबन्धनिरासोद्देशेनैव तद्विधिरिति मतान्तरमाह— **वेदान्तवाक्यानामिति**। प्रमेयासम्भावनानिवृत्त्यनुकूलन्यायविचारात्मकमननव्यावृत्तये तात्पर्यनिर्णयानुकूलेत्युक्तम्। तन्निर्णयानुकूलन्यायश्चोपक्रमोपसंहारैकरूप्यादय इति बोध्यम्। चेतोवृत्तिविशेषपदेन यत्नसाध्याक्रियारूपा वृत्तिर्विवक्षिता। न तु तदसाध्या ज्ञानरूपा वृत्तिर्विवक्षिता, ज्ञानस्य विध्ययोग्यताया वक्ष्यमाणत्वात्। ब्रह्मणीति विषयसप्तमी। **तस्येति**। ज्ञानस्येत्यर्थः। आदिपदं प्रत्यक्षादिसंग्रहार्थम्। ज्ञानोद्देशेन श्रवणं विधीयत इति मताभिमतं श्रवणशब्दार्थमनूद्य निराकरोति— **न चोक्तरूपेति**। ब्रह्मजिज्ञासासूत्रस्य साधनचतुष्टयसम्पन्नेन ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इत्यर्थ, सौत्रजिज्ञासापदस्य विचारलक्षकत्वात्। तस्य च श्रोतव्यवाक्यं मूलम्। ततश्च श्रोतव्यवाक्ये यदि श्रवणं ज्ञानरूपम्, तदा 'श्रोतव्य' इत्यस्य

**विशिष्टशब्दज्ञानमेव श्रवणमस्तु, तस्य ब्रह्मज्ञानं फलं युज्यत इति वाच्यम् । ज्ञाने विध्यनुपपत्तेः श्रवणविधेर्विचारकर्तव्यताविधायकजिज्ञासासूत्रमूलत्वोपगमाच्चोहापोहात्मकमानसक्रियारूपविचारस्यैव श्रवणत्वौचित्यात् । न च विचारस्यैव तात्पर्यनिर्णयद्वारा तज्जन्यतात्पर्यभ्रमादिपुरुषापराधरूपप्रतिबन्धकविगमद्वारा वा ब्रह्मज्ञानं**

---

श्रवणरूपज्ञानकर्तव्यतार्थं स्यात् । तथा च जिज्ञासासूत्रश्रोतव्यवाक्ययोर्मूलमूलिभावो न स्यात्, एकार्थत्वाभावादित्याह— **श्रवणविधेरिति** । ऊहो न्यायाभासेभ्यो निष्कृष्य न्यायानामुपादानम् । न्यायाभासनिराकरणमपोहः । ननु 'सदेव सोम्य' इत्यादि 'तत्सत्यं स आत्मा तत्त्वमसि' इत्येतदन्तं वाक्यजातमद्वितीयवस्तुपरम्, तत्प्रतिपादकोपक्रमोपसंहारवत्त्वादित्येवमात्मकस्य विचारस्यानुमितिरूपं तात्पर्यनिर्धारणं साक्षात्फलम् । तद्द्वारा तात्पर्यभ्रमादिरूपप्रतिबन्धकनिवृत्तिर्विचारस्य फलम् । तन्निवृत्तौ च वाक्यमप्रतिबन्धं सदद्वितीयब्रह्मबोधं जनयति । एवं श्रुत्यन्तरेष्वपीति वस्तुगतिः । तथा च श्रवणस्य साक्षाद्ब्रह्मज्ञानफलकत्वाभावेऽपि परम्परया तत्फलकत्वं स्यादिति शङ्कते— **न च विचारस्यैवेति** । अप्यर्थ एवकारः । तथा च यथा ज्ञानं शब्दप्रमाणस्य फलं तथा तद्विचारस्यापि फलमस्तु, शब्दप्रमाणफले ज्ञाने विचारस्यापि तात्पर्यनिर्णयद्वारा तदधीनप्रतिबन्धनिरासद्वारा वा हेतुत्वसंभवादित्यर्थः । तज्जन्यत्वं विगमविशेषणम् । भ्रमादेरेव पुरुषापराधः ।

फलमस्त्विति वाच्यम् । तात्पर्यज्ञानस्य शाब्दज्ञाने कारणत्वानुपगमात्कार्ये क्वचिदपि प्रतिबन्धकाभावस्य कारणत्वानुपगमाच्च तयोर्द्वारत्वानुपपत्तेर्ब्रह्मज्ञानस्य विचाररूपातिरिक्तकारणजन्यत्वे तत्प्रामाण्यस्य परतस्त्वापत्तेश्च । तस्मात्तात्पर्यनिर्णयद्वारा पुरुषापराधनिरासार्थ-

---

तात्पर्यज्ञानस्य द्वारत्वाभावे हेतुमाह— **तात्पर्यज्ञानस्येति** । प्रतिबन्धनिरासोपजननेनान्यथासिद्धत्वादिति भाव । तात्पर्यज्ञानस्य शाब्दबोधं प्रति हेतुत्वाभावे विचारस्य तात्पर्यनिर्णयसाध्यप्रतिबन्धकनिवृत्तिद्वारा शाब्दबोधहेतुत्व दूरापास्तमिति मत्वा प्रतिबन्धकाभावस्याहेतुत्वे हेतुमाह— **कार्ये क्वचिदपीति** । सत्यामपि सामग्र्यां प्रतिबन्धवशात्कार्यं न जातमिति लोकव्यवहारविरोधात्प्रतिबन्धकाभावस्य सामग्र्यामन्तर्भावो नाङ्गीक्रियते । किं त्वप्रतिबन्धा सामग्री कार्यहेतुरिति स्वीकृत्य सामग्र्यामवच्छेदकतया दण्डत्वादिवदन्यथासिद्धिरेव स्वीक्रियत इति भाव । तात्पर्यानुमितिहेतुविचारात्मकानुमानस्य शाब्दप्रमितिहेतुत्वे दूषणमाह— **ब्रह्मज्ञानस्येति** । **अतिरिक्तेति** । शब्दप्रमाणातिरिक्तेत्यर्थः । **परतस्त्वापत्तेरिति** । प्रामाण्याश्रयज्ञानस्यातिरिक्तकारणजन्यत्वरूपं प्रामाण्यस्योत्पत्तौ परतस्त्व स्यादित्यर्थः । ततश्चापसिद्धान्त इति भावः । यदि श्रवणस्य न ब्रह्मज्ञानं फलं तर्हि किमुद्देशेन तद्विधिरत आह— **तस्मादिति** । ब्रह्मज्ञानफलकत्वासंभवादित्यर्थ । **ननु**

त्वेनैव विचाररूपे श्रवणे नियमविधिः । 'द्रष्टव्यः' इति तु दर्शनार्हत्वेन स्तुतिमात्रं न श्रवणफलसंकीर्तनमिति संक्षेपशारीरकानुसारिणः ॥

**ब्रह्मज्ञानार्थं वेदान्तश्रवणे प्रवृत्तस्य चिकित्साज्ञानार्थं चरकसुश्रुतादिश्रवणे प्रवृत्तस्येव मध्ये मध्ये व्यापारान्तरेऽपि प्रवृत्तिः पसज्यत इति तन्निवृत्तिफलकः 'श्रोत-**

---

तर्हि कथम् 'द्रष्टव्य' इति श्रवणफलकीर्तनं तत्राह— **द्रष्टव्य इति त्विति । स्तुतिमात्रमिति** । आत्मन इति शेषः । स्तुतिश्च तच्छ्रवणादौ प्रवृत्त्यर्थेति भावः ।

परिसंख्याविधिपक्षमाह— **ब्रह्मज्ञानार्थमिति** । ननु वाचस्पतिमते वक्ष्यमाणरीत्या वेदान्तश्रवणस्य नित्यप्राप्तिं सिद्धां कृत्वा परिसंख्याविधिपक्षप्रवृत्तिर्वाच्या । तथा च सति ज्ञानमुद्दिश्य श्रवणाद्यनुतिष्ठत कथं व्यापारान्तरं प्रसज्येत यतस्तन्निवृत्तिफलकः परिसंख्याविधिः संभवेदित्याशङ्क्य ब्रह्मज्ञानसाधनत्वेन व्यापारान्तराप्रसक्तावपि भेदवासनावशादेव व्यापारान्तरं संभवतीति सदृष्टान्तमाह— **चिकित्सेति** । चिकित्सौषधम्, तज्ज्ञानस्य वैद्यकग्रन्थैकसाध्यत्वेन तज्ज्ञानाय चरकसुश्रुतादिसंज्ञकग्रन्थश्रवणे प्रवृत्तस्य तादर्थ्येन व्यापारान्तराप्रसक्तावपि यथा विषयवासनावशादेव तत्प्रवृत्तिस्तद्वदित्यर्थः । ननु चरकसुश्रुतादिग्रन्थश्रवणे प्रवृत्तस्य व्यापारान्तरसत्त्वेऽपि यथा चिकित्साज्ञानं निष्प्रत्यूहमुत्पद्यते

**व्यः' इति परिसंख्याविधिः 'ब्रह्मसंस्थोऽमृतत्वमेति' इति च्छान्दोग्येऽनन्यव्यापारत्वस्य मुक्त्युपायत्वावधारणात्संपूर्वस्य तिष्ठतेः समाप्तिवाचितया ब्रह्मसंस्थाशब्दिताया ब्रह्मणि समाप्तेरनन्यव्यापारत्वरूपत्वात् 'तमे-**

---

तथा प्रत्यहं वेदान्तश्रवणमनुतिष्ठतो मध्ये मध्ये लौकिकवैदिकव्यापारसत्त्वेऽपि ब्रह्मज्ञानोदयसंभवान्निष्फलः परिसंख्याविधिरित्याशङ्क्य श्रवणविध्यर्थवत्त्वाय निरन्तरमनुष्ठितश्रवणस्यैव ज्ञानसाधनत्वं न कादाचित्कस्य, अतो न नैष्फल्यमिति परिहारमभिप्रेत्य यथोक्तवाक्यार्थे श्रुतिस्मृतिवाक्यान्युदाहरति— **ब्रह्मसंस्थ इति**। न विद्यतेऽन्यो व्यापारो यस्य पुरुषस्य स तथा, तस्याभावस्तत्त्वम्, तस्येत्यर्थः। ब्रह्मविषयकश्रवणादिव्यापाराच्छमदमाद्युपबृंहितादन्यव्यापारशून्यत्वस्येति यावत्। तथा च संन्यासाधिकरणभाष्यम्— 'शमदमाद्युपबृंहितं ब्रह्मनिष्ठत्वं तस्य स्वधर्मः। तदतिक्रमे च तस्य प्रत्यवायः' इति। अवधारणं निश्चयः। ब्रह्मसंस्थपदेनायमर्थः कथं लभ्यत इत्यत आह— **संपूर्वस्येति**। न च ब्रह्मणि समाप्तिर्नाम विदेहकैवल्यरूपो लय एवास्त्विति वाच्यम्। तथा सति पुनः 'अमृतत्वमेति' इति भागवैयर्थ्यापत्तेः। अतोऽमृतत्वप्राप्तिं प्रति ब्रह्मसंस्थतोपायत्वेन विधीयत इति वक्तव्यम्। अतो ब्रह्मणि समाप्तेरनन्यव्यापारत्वे पर्यवसानं भाष्ये कृतम्। तथा चानन्यव्यापारत्वस्य मुक्त्युपायत्वबोधकवाक्येनार्थान्मुमुक्षोर्व्यापारान्तरनिवृत्तिः क्रियत इति भावः। साक्षान्निवृत्तिबोधकवाक्यमुदाह-

वैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' इत्याथर्वणे कण्ठत एव व्यापारान्तरप्रतिषेधाच्च, 'आ सुप्तेरा मृतेः कालं नयेद्वेदान्तचिन्तया' इत्यादिस्मृतेश्च । न च ब्रह्मज्ञानानुपयोगिनो व्यापारान्तरस्य श्रवणेन सहैकस्मिन्साध्ये समुच्चित्य प्राप्त्यभावान्न तन्निवृत्त्यर्थः परिसंख्याविधिर्युज्यत इति वाच्यम् । 'सहकार्यन्तरविधिः' इत्यादिसूत्रे 'यस्मिन्पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति तस्मिन्नियमविधिः' इति तद्भाष्ये च कृतश्रवणस्य शाब्दज्ञानमात्रात्कृतकृत्यतां मन्वानस्याविद्यानिवर्तकसाक्षात्कारोपयोगिनि निदिध्यासने प्रवृत्तिर्न स्यादित्यसाधनपक्षप्राप्तिमात्रेण निदिध्यासने नियमविधेरभ्युपगत-

---

गति— तमेवैकमिति । यस्मिन्नाधारे द्यावापृथिव्यादि समस्तं जगदध्यस्तं तमेवाधारमेकरूपमात्मानं जानथ हे मुमुक्षवः । ज्ञानसाधनत्वेन चानात्मप्रतिपादकशब्दोच्चारणादित्यागः कर्तव्य इत्याह श्रुतिः— 'अन्या वाचो विमुञ्चथ' इति । नियमविधिवादी शङ्कते— न च ब्रह्मज्ञानानुपयोगिन इति । प्रतिबन्द्या समाधत्ते— सहकार्यन्तरेति । न प्राप्नोति, मौनमिति शेषः । उदाहृतसूत्रभाष्ययोर्नियमविधिवादिसमतं तात्पर्यं परिसंख्याविधिवादी दर्शयति— कृतश्रवणस्येति । मन्वानस्येत्यनन्तरं व्यापारान्तरेऽपि प्रवर्तमानस्येति शेषः । सूत्रे तद्भाष्ये चासा-

**तया तन्न्यायेनासाधनस्य समुच्चित्य प्राप्तावपि तन्नि-वृत्तिफलकस्य परिसंख्याविधेः संभवादिति 'नियमः परिसंख्या वा विध्यर्थोऽत्र भवेद्यतः। अनात्मादर्शनेनैव परात्मानमुपास्महे ॥' इति वार्त्तिकवचनानुसारिणः केचिदाहुः ॥**

**'आत्मा श्रोतव्यः' इति मननादिवदात्मविषयकत्वेन निबध्यमानं श्रवणमागमाचार्योपदेशजन्मात्मज्ञानमेव, न**

---

धनपक्षप्राप्तिमात्रेण नियमविधेरभ्युपगततयेति सबन्धः। वार्त्तिकेऽत्रेत्यस्य श्रोतव्यवाक्य इत्यर्थः। अत्र नियमो विध्यर्थो भवेदित्येक सबन्ध। यदि नित्यप्राप्तत्वान्नियमविधिर्न सभवति तदा परिसख्या वा विध्यर्थो भवेदित्यपरः संबन्ध.। परिसंख्याया विध्यर्थत्वे हेतुर्यत इत्यादिः। परात्मोपासनेऽन्यव्यापाररहिते वयं मुमुक्षवो यत. प्रवृत्ता इत्यर्थ ॥

श्रवणादीनां विधेयत्वपक्ष मतभेदेन दर्शयित्वा तेषां विध्यभावपक्षमाह— **आत्मा श्रोतव्य इतीत्यादिना। निबध्यमानमिति।** यथात्मविषयकत्वेनोच्यमानं मननं निदिध्यासनं च ज्ञानरूपं तथा श्रवणमपि ज्ञानरूपमेवेत्यर्थः। **नेति।** विचारस्यानुष्ठेयक्रियारूपस्य साक्षादात्मविषयकत्वानुपपत्तेरिति भावः। ननु मननादिवदिति दृष्टान्तोऽनुपपन्न., मनननिदिध्यासनयोर्ज्ञानत्वाभावात्। मनन

द्रि युक्त्यालोचनरूपो व्यापारः । 'ध्यै चिन्तायाम्' इत्यनुशासनानुरोधेन निदिध्यासनं ध्यानक्रिया, न ज्ञानम् । अतः कथं मननादिवदिति मनननिदिध्यासनयोर्ज्ञानत्वं सिद्धतया निर्दिश्यत इति चेत्, उच्यते— आत्मा ब्रह्मस्वभावश्चिद्रूपत्वाद्ब्रह्मवत्, बुद्ध्यादि कल्पितो दृश्यत्वाच्छुक्तिरजतादिवदित्याद्यनुमितेरेव मननत्वोपगमात् । तदुक्तं चतुर्थमैत्रेयीब्राह्मणवार्त्तिके— 'आगमार्थविनिश्चित्यै मन्तव्य इति भण्यते । वेदशब्दानुरोध्यत्र तर्कोऽपि विनियुज्यते । पदार्थविषयस्तर्कस्तथैवानुमितिर्भवेत् ॥' इति । श्रुतार्थदार्ढ्याय तर्करूपं मननं विधीयते । सोऽपि तर्कः श्रुत्यविरुद्ध एव मननत्वेन विधीयते । तच्च मननं तत्त्वपदार्थविषयकमेव, न तु वाक्यार्थविषयकम्, तस्य वाक्यैकमेयत्वात् । तथा-शब्दः समुच्चयार्थः । यथा मननात्मकतर्कस्य वेदाविरोधित्वं तथानुमितिरूपत्वं चेत्यर्थः । अत एव न्यायतन्त्रेऽपि मननस्यानुमितिरूपत्वमिष्यते ; निदिध्यासनमपि वार्त्तिककारमते ज्ञानमेव । तथा हि—बृहदारण्यके चतुर्थाध्यायषष्ठाध्यायगतयोर्मैत्रेयीब्राह्मणयोराम्नायते— 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति, अनन्तरं चतुर्थे 'मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन' इति, षष्ठे तु 'मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते' इति । तत्रोभयत्राक्षेपवार्त्तिकम्— 'अनुवादे यथोक्तानां प्रक्रान्ते दर्शनादिषु । विज्ञानेनेत्यथ कथं निदिध्यासनमुच्यते ॥' इति । 'अयमात्मा द्रष्टव्यः' इत्यादिनोक्तानामनुवादे प्रक्रान्ते सति दर्शनादिषु मध्ये श्रुतं निदिध्यासनं विज्ञानेनेति पदेन कथमुच्यतेऽनूद्यते ।

दर्शनादीनां समानपदैरेवानुवाददर्शनेन निदिध्यासनस्यापि तद्वन्नि दिध्यासनेनेत्यनुवादः स्यात्, न तु विज्ञानपदेनेत्यर्थः। तस्य समाधानवार्त्तिकम्— 'ध्यानाशङ्कानिवृत्त्यर्थं विज्ञानेनेति भण्यते। निदिध्यासनशब्देन ध्यानमाशङ्कयते यतः ॥' इति। निदिध्यासन शब्दस्य ध्यानवाचित्वाच्छ्रवणमननानन्तरमनुभवाङ्गत्वेन ध्यानम् 'निदिध्यासितव्यः' इत्यनेन विधीयत इति यतः पूर्ववादिभिरा-शङ्कयते, अतस्तदाशङ्कानिवृत्त्यर्थमनुवादावसरे स्थित्वा पूर्ववाक्ये निदिध्यासनं विज्ञानरूपं विवक्षितं न तु ध्यानम्, अतो नात्र ध्यानविधिशङ्कावकाश इत्याशयवती श्रुतिर्विज्ञानपदेन निदिध्यास-नमनुवदतीति वार्त्तिकार्थः। ध्यानस्यानुभवाङ्गत्वे को दोषो यत-स्तदाशङ्का श्रुत्या निरस्यत इत्यत आह तदनन्तरं वार्त्तिकार्धम्— 'विज्ञानोत्पत्तिहेतुत्वं ध्यानादेः प्रागवादिषम्' इति। ध्यानस्य तन्नियोगस्य वा विज्ञानोत्पत्तिहेतुत्वं प्रति यद्दूषणं वक्तव्यं तत्प्रागेव संबन्धग्रन्थादावुक्तवानस्मीत्यर्थः। तत्र ह्युक्तम्— तत्त्वंपदार्थगोच-रश्रवणमननाभ्यामसकृदभ्यस्ताभ्यां तत्त्वंपदलक्ष्यार्थनिर्णये सति वाक्यार्थज्ञानस्यैवावसरप्राप्तत्वेन ध्यानविधेरनवकाशात्। न च ताभ्यां प्रमाणप्रमेयासंभावनानिवृत्तावपि विपरीतप्रत्ययेन प्रतिब-न्धान्न वाक्यार्थबोधोत्पत्तिरिति वाच्यम्। श्रवणमननयोरेवासकृद-भ्यासमहिम्ना विपरीतप्रत्ययस्यापि निवृत्तिसंभवाद्वाक्यार्थबोध-निवर्त्यस्य विपरीतप्रत्ययस्य तदप्रतिबन्धकत्वाच्च, लोके विपर्ययस्य स्वविरोधिदर्शनोत्पत्तिप्रतिबन्धकत्वादर्शनादिति। ननु यदि निदि-ध्यासनं न ध्यानं किं तर्हि तदित्यत आह वार्त्तिकम्— 'अपराय-

तात्पर्यविचाररूपमिति न तत्र कोऽपि विधिः । अत एव समन्वयसूत्र आत्मज्ञानविधिनिराकरणानन्तरं भाष्यम्— "किमर्थानि तर्हि 'आत्मा वा अरे द्रष्टव्यः'

---

त्त्वबोधोऽत्र निदिध्यासनमुच्यते' ध्यानस्यैव पुरुषयत्नानपेक्षत्वमपरायत्तत्वम् । 'यावद्यथोक्तविज्ञानमाविर्भवति भास्वरम् । श्रवणादिक्रिया तावत्कर्तव्येह प्रयत्नतः ॥' मननमादिपदार्थः । 'श्रुत्वा मत्वाथ त साक्षादात्मानं प्रतिपद्यते' अथ श्रवणमननपरिपाकजनिततत्त्वंपदलक्ष्यार्थनिर्णयानन्तरमेव वाक्येन ब्रह्मात्मानं साक्षादपरोक्षतया प्रतिपद्यतेऽनुभवतीत्यर्थः । वाक्यार्थज्ञानवतः कृतकृत्यतामाह— 'अनन्यायत्तविज्ञाने श्रवणादेरुपायतः । जाते नापेक्षते किंचित्प्रतीचोऽनुभवात्परम् ॥' इति । वृत्तिज्ञाने जाते सति तेन प्रतीचो ब्रह्मत्वस्फुरणादनन्तरं न किंचिदपेक्षत इत्यर्थः । एवं वार्तिककारमते निदिध्यासनस्य ज्ञानत्वाभ्युपगमान्न मननादिवदिति दृष्टान्तासिद्धिः । न च वार्तिककारमते 'निदिध्यासितव्यः' इत्यस्य 'द्रष्टव्य' इत्यनेन पौनरुक्त्यं स्यादिति वाच्यम् । दर्शनोद्देशेन श्रवणमननविधानानन्तरं पुनः फलकीर्तनस्य तदुपसंहारपरत्वोपपत्तेः । अथ वा 'द्रष्टव्यः' इति विचारप्रयोजकापातदर्शनानुवादः, 'निदिध्यासितव्यः' इति तु विचारफलभूतसाक्षात्कारानुवाद इति पौनरुक्त्यपरिहारसंभवात् । श्रवणादौ विध्यभावे भाष्यसंमतिमाह— **अत एवेति** । श्रवणमनननिदिध्यासनानां दर्शनवज्ज्ञानरूपत्वेन क्रियारूपत्वेऽपि वक्ष्यमाणविधया नि-

इत्यादीनि वचनानि विधिच्छायानि । स्वाभाविकप्रवृत्ति-

---

त्यप्राप्तत्वेन च विध्ययोग्यत्वादेवेत्यर्थः । **किमर्थानीति** । व्यर्थानि स्युरिति यावत् । आदिपदम् 'श्रोतव्य' इत्यादेसंग्रहार्थम् । **विधिच्छायानीति** । 'अध्येतव्य.' इति प्रसिद्धविधितुल्यानीत्यर्थः । अत्र तव्यप्रत्ययैर्दर्शनश्रवणादिगता प्रशंसा लक्ष्यते । तथा च यो हि मुमुक्षुरात्मदर्शनश्रवणादीन्येव मुक्तिसाधनानीति ज्ञात्वापि संन्यासब्रह्मचर्यादिसहितश्रवणाद्यनुष्ठानक्लेशमनुसंचिन्त्य न तत्र सर्वोत्साहेन प्रवर्तते किं तु यथाप्राप्तान्येव वर्णाश्रमानुरूपाणि कर्माणि चोपासनानि चानुतिष्ठस्तत्रापि निर्वृतिं न लभते तैरात्यन्तिकपुरुषार्थालाभानुसंधानेन, तं प्रत्यात्मदर्शनश्रवणादिप्रशंसात्मकं प्रवर्तते 'आत्मा वै' इत्यादिवाक्यं तस्य सर्वोत्साहेन श्रवणादावेव प्रवृत्तिर्भवत्वित्याशयेन । अतो न विधिप्रत्ययानां वैयर्थ्यमिति भाष्यकारः परिहरति— **स्वाभाविकेति** । आदिपदेन "यो हि बहिर्मुख· प्रवर्तते पुरुष इष्टं मे भूयादनिष्टं मे मा भूदिति न च तत्रात्यन्तिक पुरुषार्थं लभते, तमात्यन्तिकपुरुषार्थवाञ्छिनं स्वाभाविकात्कार्यकरणसंघातप्रवृत्तिगोचराद्विमुखीकृत्य प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति 'आत्मा वा अरे द्रष्टव्यः' इत्यादीनि" इत्यन्तं भाष्यं सगृह्यते । स्वाभाविकत्वं विषयविशेषणम् । संग्रहभाष्यं विवृणोति— **यो हीति** । प्रवर्तत इति । नानाविधकर्मोपासनान्यनुतिष्ठतीत्यर्थ । इष्टं मे भूयादनिष्टं मे मा भूदित्यनेन दुःखसामान्यास्पृष्टसुखकामना

विषयविमुखीकरणार्थानीति ब्रूमः” इत्यादि । यदि च

---

ब्रह्मानन्दरूपात्यन्तिकपुरुषार्थगोचरेह विवक्षिता । अत एवाह— न च तत्रात्यन्तिकं पुरुषार्थं लभत इति । बाह्यसाधन तत्र-शब्दार्थः । स्वाभाविकादिति । स्वभावोऽविद्या, तत्कार्यभूता दित्यर्थः । संघातस्य प्रवृत्तिः कर्मोपासनयोरनुष्ठानम्, तद्गोचराद्-व्यदेवतामन्त्रादिरूपादित्यर्थ । प्रत्यगात्मनि विषये स्रोतश्चित्तप्रा-वण्यं यस्य स प्रत्यगात्मस्रोताः, तस्य भावस्तत्ता, तयेत्यर्थः । तं बाह्यसाधनाद्विमुखीकृत्य श्रवणादिष्वेव प्रवर्तयन्तीत्यर्थ. । एव श्रव-णादेर्ज्ञानरूपत्वान्न तत्र कोऽपि विधिरित्युक्तम । इदानी श्रवणादेः क्रियारूपत्वमुपेत्यापि न तत्र कोऽपि विधिरित्याह— **यदि चेति** । तस्य क्रियारूपत्वं च वार्त्तिककारैरेवोक्तम्— ‘श्रवणादिक्रिया ता-वत्कर्तव्येह प्रयत्नतः’ इति । आदिपदेन मननस्य संग्रहो न ध्या-नस्य, वार्त्तिककारमते श्रवणमननानन्तरं ध्यानानुष्ठानाभावस्यो-क्तत्वात् । न च ध्यानस्याननुष्ठेयत्वे ‘ओमित्येव ध्यायथ आत्मा-नम्’ ‘विद्यामेता योगविधिं च कृत्स्नम्’ इत्यादिबहुवाक्यविरोध इति वाच्यम् । तेषाम् ‘तत्कारणं सांख्ययोगाभिपन्नम्’ इति श्रुति-गतयोगपदोदितमार्गान्तरप्रतिपादकतायास्तृतीयपरिच्छेदे ध्यान-दीपोक्तप्रकारेण वक्ष्यमाणत्वात् । न च ‘तत्कारणम्—’ इति श्रुतिगतसांख्यपदोदितविचारमार्गेऽपि ध्यानान्तर्भावः पूर्वमुक्त इति वाच्यम् । निदिध्यासनपदस्य ध्यानार्थकत्वमताभिप्रायेण तदन्त-र्भावस्योक्तत्वात् । ध्यानस्य सांख्यमार्गाद्बहिर्भाव एव भाष्यकारा-

वेदान्ततात्पर्यविचारः श्रवणं तदा तस्य तात्पर्यनिर्णय-

---

णामपि समत. । तथा च 'एतेन योगः प्रत्युक्तः' इत्यधिकरण-भाष्यम्— "यत्तु दर्शनमुक्तम् 'तत्कारण सांख्ययोगाभिपन्नम्' इति, वैदिकमेव तत्र ज्ञान ध्यानं च सांख्ययोगशब्दाभ्यामभिलप्येते" इति । ध्यानपद ज्ञानाभ्यासपरम् । वैदिकं वेदोक्तम् । एतेन वेद-विरोधादिना योगशास्त्रं निराकृतमिति सूत्रार्थः । साङ्ख्यमार्गे ध्यानाभावमभिप्रेत्यैव सर्वज्ञात्ममुनिभिरपि निदिध्यासनपदस्य ज्ञा-नार्थकत्वमुक्तम्— 'श्रवणमननबुद्ध्योर्जातयोर्यत्फलं तन्निपुणमति-भिरुच्चैरुच्यते दर्शनाय । अनुभवनविहीना यैवमेवेति बुद्धिः श्रुतम-ननसमाप्तौ तन्निदिध्यासनं हि ॥' इति । अस्य श्लोकस्याश्रमश्रीचर-णाना व्याख्यानमिदम्— 'निदिध्यासने पक्षान्तरमाह— श्रव-णेति । श्रवणमननबुद्ध्योर्जातयोर्यत्फलं तद्दर्शनाय निपुणमतिभिरु-च्चैरुच्यत इति संबन्धः । एतदेव विशदयति— अनुभवनविहीनेति । श्रुत श्रवणम् । दीर्घकालादरनैरन्तर्यानुष्ठानेन श्रवणमननपरिपाके सतीत्यर्थः । अनुभवनविहीना साक्षात्काररहिता, अविद्यानिवर्त-कवृत्तिरूपसाक्षात्कारभिन्नेति यावत् । यैवमेवेति बुद्धिः, अहं चि-दात्मा ब्रह्मस्वरूप एव ब्रह्म च चिदेकरसप्रत्यगात्मस्वभावमेवेति तत्त्वपदलक्ष्यनिर्णयात्मिका बुद्धिः, तदेव निदिध्यासनं नाम न ध्यानम् । अस्मिन्पक्षे श्रवणमननयोरेवानुष्ठेयत्वम् । निदिध्यासनं तु नानुष्ठेयम्, दीर्घकालमनुष्ठितश्रवणमननफलरूपा बुद्धिर्यदा भव-ति तदैव साक्षात्कारोत्पत्तेः । पूर्वपक्षे तु निदिध्यासनमपि पृथग-

द्वारा वेदान्ततात्पर्यभ्रमसंशयरूपप्रतिबन्धकनिरास एव फलम्, न प्रतिबन्धकान्तरनिरासो ब्रह्मावगमो वा।

---

नुष्ठेयमिति भेदः' इति। साङ्ख्यमार्गे ध्यानाभावमभिप्रेत्यैव यावज्ज्ञानोदयं विचारस्यैव कर्तव्यत्वं ध्यानदीपे विद्यारण्यगुरुभिरप्युक्तम्—'विचार्याप्यापरोक्ष्येण ब्रह्मात्मानं न वेत्ति चेत्। आपरोक्ष्यावसानत्वाद्भूयो भूयो विचारयेत्॥ विचारयन्नामरणं नैवात्मानं लभेत चेत्। जन्मान्तरे लभेतैव प्रतिबन्धक्षये सति॥' इति। एवमानन्दपञ्चकेऽप्यात्मानन्दावसाने साङ्ख्यमार्गस्य ध्यानरहितस्यापि ध्यानेन सर्वांशेऽपि तुल्यफलत्वं बहुधा प्रपञ्चितमिति संक्षेपः। एवकारव्यवच्छेद्यमाह— **नेति**। वाकारो नञनुकर्षणार्थः। विचारस्य प्रतिबन्धनिरासद्वारा ब्रह्मावगमोपयोगसंभवेऽपि न साक्षात्तत्फलकत्वम्, ज्ञानस्य प्रमाणफलत्वादित्युक्तत्वादिति भावः। ननूक्तप्रतिबन्धनिरासद्वारा विचारस्याविद्यानिवर्तकसाक्षात्कारोपयोगित्वप्राप्तावपि तादृशसाक्षात्कारप्रतिबन्धकपापनिवृत्तिद्वारा साक्षात्कारसाधनत्वस्य मानान्तरादप्राप्तत्वात् 'श्रोतव्यः' इत्यत्र श्रवणस्य पापनिवृत्तिद्वारा विद्यासाधनत्वमुपदिश्यते। न च विद्याप्रतिबन्धकपापनिवृत्तेर्यज्ञादिनैव सिद्धत्वाद्विधिवैयर्थ्यमिति वाच्यम्। प्रतिबन्धकपापानामानन्त्येन केषांचिद्यज्ञाद्यनुष्ठानेन केषांचिच्छ्रवणानुष्ठानेन निवृत्तिरिति विभागकल्पनोपपत्तेः। तथा च प्राप्तं पुनरपूर्वविधित्वम्। एवं च 'सहकार्यन्तरविधिः—' इत्यधिकरणभाष्ये पाण्डित्यशब्दितश्रवणेऽपूर्वत्वोक्तिश्च सगच्छत इति शङ्कां वारयति— **न प्रतिबन्धका-**

तत्फलकत्वं च तस्य लोकत एव प्राप्तं साधनान्तरं च किंचिद्विकल्प्य समुच्चित्य वा न प्राप्तमिति न तत्र विधित्रयस्याप्यवकाशः। विचारविध्यभावेऽपि विज्ञानार्थतया विधीयमानं गुरूपसदनं दृष्टद्वारसंभवेऽदृष्टकल्पनायोगाद्गुरुमुखाधीनवेदान्तविचारद्वारैव विज्ञानार्थं पर्यव-

---

न्तरनिरास इति। तात्पर्यभ्रमसंशयरूपप्रतिबन्धकापेक्षयान्यत्पापरूपं प्रतिबन्धकं प्रतिबन्धकान्तरम्, तन्निरासो न श्रवणफलम्। अतो न तद्द्वारा ज्ञानाय श्रवणं विधेयमित्यर्थः। अयं भावः— 'श्रोतव्यः' इत्यस्यापूर्वविधित्वमयुक्तम्, तस्यावृत्त्यधिकरणे निरस्तत्वाद्विवरणाद्युक्तरीत्या वेदान्तश्रवणस्यान्वयव्यतिरेकप्रमाणसिद्धं तात्पर्यभ्रमादिलक्षणप्रतिबन्धकनिवृत्तिरूपदृष्टफलकत्वमुपजीव्य श्रवणेनैव ज्ञानं प्रतिबन्धकनिवृत्तिं वा संपादयेदिति नियमविधित्वसंभवे 'स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः' इत्यादिभाष्यानुसारेण ब्रह्मप्रतिपत्तिसाधनश्रवणादिस्तुतिद्वारा तत्र प्रवृत्तिविशेषकरत्वमात्रेण ब्रह्मप्रकरणनिवेशसंभवे वापूर्वविधित्वायोगाद्भाष्यकारीयापूर्वत्वोक्तेः पाक्षिकाप्राप्त्यभिप्रायकत्वसंभवाच्चेति। तत्फलकत्वं चेति। भ्रमादिरूपप्रतिबन्धकनिरासफलकत्वं चेत्यर्थः। ननु प्राप्तत्वेऽपि नियमविधित्वादिसंभवात्कथं विधित्रयाभाव इत्यत्राह— साधनान्तरं चेति। ननु गुर्वधीनविचारेण सह गुरुरहितविचारस्य विकल्पेन प्राप्तिरस्तीत्यत आह— विचारविध्यभावेऽपीति। अत एवेति। उपगमनविधित एवेत्यर्थः। व्यावृ-

**स्यति । अत एव स्वप्रयत्नसाध्यविचारव्यावृत्तिः । अध्ययनविध्यभावे तूपगमनं विधीयमानमक्षरावाप्त्यर्थत्वेनाविधीयमानत्वान्न तदर्थं गुरुमुखोच्चारणानूच्चारणमध्ययनं द्वारीकरोतीति लिखितपाठादिव्यावृत्त्यसिद्धेः सफलोऽध्ययननियमविधिः । न च तात्पर्यभ्रमाद्वैतनिरासाय वेदान्तविचारार्थिनः कदाचिद्द्वैतशास्त्रेऽपि प्रवृत्तिः स्यात्, तत्रापि तदभिमतयोजनया वेदान्तविचार-**

---

त्तिरित्यनन्तरं लभ्यत इति श्रोतव्यवाक्ये गुर्वधीनविचारनियमविधिरनर्थक इति शेषः । न चोपगमनविधेर्विचारविध्यङ्गतया तदभाव उपगमनविधेरात्मलाभ एव नास्तीत्युक्तमिति वाच्यम् । गुरूपसदनस्य ब्रह्मज्ञानं प्रति द्वारापेक्षायां लोकसिद्धस्यैव गुर्वधीनविचारस्य द्वारत्वेन स्वीकारोपपत्तौ श्रोतव्यविध्यपेक्षाभावेन तच्छेषत्वासिद्धेर्विचारवदुपगमनस्यापि विद्याङ्गत्वोपपत्तेश्चेति भावः । पूर्वोक्तमतिप्रसङ्गं परिहरति— **अध्ययनविध्यभावे त्विति** । अध्ययनविध्यभावे तु लिखितपाठादिव्यावृत्त्यसिद्धेः सफलोऽध्ययननियमविधिरिति सबन्धः । **तदर्थमिति** । अक्षरावाप्त्यर्थमित्यर्थः । अध्ययनाङ्गोपगमनस्य विद्यार्थोपगमनापेक्षया विशेषार्थकस्तुशब्दः । तमेवाह— **उपगमनमित्यादिना** । अध्ययनस्याक्षरावाप्तिफलकत्वं विवरणादौ साधितमिति भावः । व्यावर्त्यान्तरं दूषयति— **न च तात्पर्येति** । ननु वस्तुतस्तन्निरासकत्वाभावेऽपि भिन्नात्मज्ञानं मुक्तिसाधनमिति भ्रमद्वारा तद्भ्रमात्तत्र प्रवृत्तिः संभवतीत्युक्तमिति

सत्त्वादित्यद्वैतात्मपरवेदान्तविचारनियमविधिरर्थवानिति वाच्यम् । स्वयमेव तात्पर्यभ्रमहेतोस्तस्य तन्निरासकत्वाभावेन साधनान्तरप्राप्त्यभावात् । तन्निरासकत्वभ्रमेण तत्रापि कस्यचित्प्रवृत्तिः स्यादित्येतावता 'श्रोतव्यः' इति नियमविधेरभ्युपगम इत्यपि न । ईश्वरानुग्रहलब्धाद्वैतश्रद्धारहितस्य श्रोतव्यवाक्येऽपि पराभिम-

---

नेत्याह— **तन्निरासकत्वभ्रमेणे**ति । इह जन्मनि जन्मान्तरे वा यज्ञाद्यनुष्ठानजनितदृढविविदिषावतः साधनचतुष्टयसंपन्नस्य श्रवणविधावधिकार इत्यविवादम् । यज्ञादिजनितादृष्टं च निष्प्रपञ्चाद्वितीयब्रह्मसाक्षात्कारस्य साङ्गाध्ययनलब्धैर्वेदान्तैर्मुक्तिसाधनत्वनिश्चय सपाद्य तादृशब्रह्मसाक्षात्कारे दृढेच्छां च विविदिषाशब्दितामुत्पाद्य तद्द्वाराद्वितीयात्मसाक्षात्कारसाधनभूताद्वितीयात्मश्रवणादावेव मुमुक्षुं प्रवर्तयति । न तु जीवभिन्नात्मज्ञानस्य मुक्तिसाधनत्वभ्रमापादनद्वारा भिन्नात्मज्ञानतत्साधनविचारादाविच्छाप्रवृत्त्यादिकमप्युत्पादयति, तदिच्छादेर्भिन्नात्मविचारद्वारा यज्ञादिफलभूतनिष्प्रपञ्चब्रह्मसाक्षात्कारहेतुत्वाभावात् । तथा च स्मृतिः— 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना' इति । यज्ञादिसपादितादीश्वरानुग्रहादेव पुंसामद्वैतब्रह्मज्ञानेच्छारूपा तद्वासना भवतीति तदर्थः । तथा च यथोक्तभ्रमवतोऽद्वैतब्रह्मतत्त्वसाक्षात्कारादाविच्छाश्रद्धादिशून्यस्य श्रवणविधावनधिकारान्न तं प्रति नियमविधिरर्थवानित्याह— **ईश्वरानुग्रहे**ति । **पराभिमते**ति । 'आत्मा... श्रोतव्यः'

तयोजनया सद्वितीयात्मविचारविधिपरत्वभ्रमसंभवेन भ्रमप्रयुक्ताया अन्यत्र प्रवृत्तेर्विधिशतेनाप्यपरिहार्यत्वात् । न च व्यापारान्तरनिवृत्त्यर्था परिसंख्येति युक्तम् । असंन्यासिनो व्यापारान्तरनिवृत्तेरशक्यत्वात्संन्यासिनस्तन्निवृत्तेर्ब्रह्मसंस्थया सह संन्यासविधायकेन 'ब्रह्मसंस्थोऽमृतत्वमेति' इति श्रुत्यन्तरेण सिद्धतया संन्यासविधायकश्रुत्यन्तरमुपेक्ष्य श्रोतव्यवाक्येन तस्य व्यापारान्तरनिवृत्त्युपदेशस्य व्यर्थत्वात् । न च विचारविध्य-

---

इति श्रुतावात्मशब्दस्तावज्जीवपर एव । न परमात्मपरः, 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति पूर्ववाक्ये जीवस्य प्रकृतत्वात् । न च 'इदं सर्वं यदयमात्मा' इति वाक्यशेषे सर्वात्मकस्य परमात्मनः प्रतिपादनाच्छ्रोतव्यवाक्यस्थमात्मपदमद्वितीयात्मपरमिति वाच्यम् । तत्रापि तत्प्रतिपादनासिद्धेः । न हि प्रपञ्चपरमात्मनोरभेदः संभवति, चेतनाचेतनयोरैक्यस्य विरुद्धत्वाच्छ्रुतेरभेदध्यानविधिपरत्वोपपत्तेश्चेत्यादियोजना पराभिमता द्रष्टव्या । **अन्यत्रेति** । भिन्नात्मविचार इत्यर्थः । परिसंख्याविधिं दूषयति— **न चेति** । श्रवणविधिना किं गृहस्थादेर्व्यापारान्तरनिवृत्तिरुपादिश्यते किं वा संन्यासविधिसिद्धस्य संन्यासिन इति विकल्पं मनसि निधाय क्रमेण दूषयति— **असंन्यासिन इति** । **अशक्यत्वादिति** । विध्यन्तरविरोधापत्तिरशक्यत्वे हेतुः । त-

**संभवेऽपि विचारविषयवेदान्ते नियमविधिः संभवति, भाषाप्रबन्धादेर्व्यावर्त्यस्य सत्त्वादिति वाच्यम् । संनिधानादेव वेदान्तनियमस्य लब्धत्वेन विधिविषयत्वायोगात्, 'स्वाध्यायोऽध्येतव्यः' इत्यर्थावबोधार्थनियमविधिबलादेवाध्ययनगृहीतवेदोत्पादितं वेदार्थज्ञानं फलपर्यवसायि न कारणान्तरोत्पादितमित्यस्यार्थस्य लब्धत्वेन वेदार्थे ब्रह्मणि मोक्षाय ज्ञातव्ये भाषाप्रबन्धादी-**

---

न्निवृत्ते. सिद्धतयोपदेशस्य व्यर्थत्वादिति सबन्धः । 'ब्रह्मसंस्थोऽमृतत्वमेति' इति श्रुत्यन्तरस्य ब्रह्मसंस्थताधर्मकसंन्यासाश्रमविधायकत्वम् 'परामर्शं जैमिनिः' इत्यधिकरणभाष्ये स्फुटमिति भाव । विचारविषयत्वेन वेदान्तनियमविधिरिति पक्षं दूषयति— **न च विचारेति** । **संनिधानादेवेति** । अधीतसाङ्गस्वाध्यायस्य वेदान्तैरापातप्रतिपन्नब्रह्मात्मजिज्ञासोर्जिज्ञासानिवर्तकनिर्णयाय कर्तव्यत्वेन विचारे प्राप्ते सति विचारविषयमन्वेषमाणस्य वेदान्ताना बुद्धिस्थत्वाद्वेदान्ता एव मया विचारणीया इति बुद्धिरुत्पद्यते । तथा च विधिं विनैव वेदान्तनियमस्य लब्धत्वेन विधिना तन्नियमनं व्यर्थमिति भावः । विधिं विनैव वेदान्तनियमलाभे हेत्वन्तरमाह— **स्वाध्याय इति** । **अर्थावबोधेति** । मीमांसकमतमाश्रित्योक्तमिदम् । अक्षरावाप्तिफलकोऽध्ययनविधिरिति सिद्धान्तेऽपि येषां वाक्यानामध्ययनावाप्तानामर्थज्ञानद्वारा पुरुषार्थोपयोगः संभवति तेषां वाक्यानामर्थज्ञानमध्ययनलब्धैर्वाक्यैरेवोत्पादितं

नामप्राप्तेश्च। न च 'सहकार्यन्तरविधिः—' इत्यधिकरणे पाण्डित्यबाल्यमौनशब्दितेषु श्रवणमनननिदिध्यासनेषु विधिरभ्युपगत इति वाच्यम्। विचारे विचार्यतात्पर्यनिर्णयहेतुत्वस्य वस्तुसिद्ध्यनुकूलयुक्त्यनुसंधानरूपे मनने तत्प्रत्ययाभ्यासरूपे निदिध्यासने च वस्त्ववगमवैशद्यहेतुत्वस्य च लोकसिद्धत्वेन तेषु विध्यनपेक्षणाद्विधिच्छायार्थवादस्यैव प्रशंसाद्वारा प्रवृत्त्यतिशयक-

---

फलपर्यवसायि, न तदतिरिक्तभाषाप्रबन्धादिजनितामितिरीत्याध्ययनविधिफलाक्षराधाने पुरुषार्थपर्यवसानकल्पनान्न भाषाप्रबन्धादिप्रसक्तिरित्यर्थः। इतिहासपुराणमादिपदार्थः। श्रवणादीनामविधेयत्वे सूत्रभाष्यविरोधं शङ्कते— **न चेति**। **अभ्युपगत इति**। सूत्रभाष्यकाराभ्यामिति शेषः। विरोधं परिहर्तुं प्रथमं श्रवणादीनां विधियोग्यक्रियारूपत्वेऽपि नित्यप्राप्तत्वान्न विधेयत्वमित्याह— **विचार इति**। तत्प्रत्ययेत्यत्र तत्पदं वस्तुपरम्। अवगमस्य वैशद्यं प्रतिबन्धराहित्यम्। सूत्रभाष्ययोः श्रवणादिविधित्वव्यवहारो गौणः, मुख्यासंभवस्य दर्शितत्वादिति विरोधं परिहरति— **विधिच्छायार्थवादस्यैवेति**। 'विष्णुरुपांशु यष्टव्य' इत्यादेरिवेत्यर्थः। तथा हि— 'उपांशुयाजमन्तरा यजति' इत्याम्नाय पुनराम्नायते— 'विष्णुरुपांशु यष्टव्यः' 'प्रजापतिरुपांशु यष्टव्यः' 'अग्नीषोमावुपांशु यष्टव्यौ' इति। अत्रान्तरावाक्यमाग्नेयाग्नीषोमीयपुरोडाशयोरन्तरालकालविशिष्टयागविधायकम्। विष्ण्वादिवाक्यत्रयं तु म-

न्त्रवर्णप्राप्तवैकल्पिकदेवतानुवादेनान्तरावाक्यविहितयागस्तावक्रम - र्थवादमा[illegible]ति व्यवस्थापित पूर्वतन्त्रे । तदत्र दृष्टान्तत्वेनोदाहृत-मिति द्रष्टव्यम्। यत्तु 'तत्कारणं साङ्ख्ययोगाभिपन्नम्' इति श्रुतौ योगपदोपात्तस्य व्यावर्त्यस्य सभवाद्विचारसमर्थाधिकारिण प्रति तद्व्यावृत्तिफलको नियमविधिः संभवतीति, तन्न । विचारसमर्थ-स्याधिकारिणः कालान्तरे स्वोद्भावितानुपपत्तिवशेनान्योद्भावितानु-पपत्तिवशेन वा पुनस्तत्त्वसशये सत्यवधारणात्मक वेदान्तार्थज्ञानं न सभवतीति योग्यतावशेन तं प्रति विधि विना विचारस्यैव नि-त्यतया प्राप्तत्वात्। यत्तु सगुणब्रह्मोपासनं व्यावर्त्यमुक्त तन्न। श्रवण-विध्यधिकारिणः सर्वतो नि स्पृहस्य ब्रह्मलोकप्राप्तिद्वारा मुक्तिसा-धनसगुणोपासने पक्षेऽपि प्रवृत्तेरसभवेन तस्य व्यावर्त्यत्वासंभवात्स-गुणोपासनस्यापि श्रवणादिद्वारैव विद्यासाधनत्वेन नखविदलनादे-रवघाततुल्यकक्ष्यत्ववत्सगुणोपासनस्य श्रवणादिना सह विकल्पेन प्राप्त्यभावाच्च न तद्व्यावृत्तिफलको नियमविधिः सभवति । न च सगुणोपासनया श्रवणादिक विनैव सगुणसाक्षात्कारवन्निर्गुणसाक्षा-त्कारोदयः संभवतीति वाच्यम् । प्रमाणप्रमेयासंभावनादिप्रतिबन्ध-कानवृत्तिद्वारा श्रवणादे सत्तानिश्चयरूपब्रह्मज्ञानोपायत्वग्राहकतया पूर्वोक्तप्रमाणानुरोधेन श्रवणादेर्नित्यवदनुवादलिङ्गेन च सगुणोपास-नया क्रमेण परममुक्तिप्रतिपादकशास्त्रस्यापि श्रवणादिद्वारकज्ञानो-त्पत्त्यविरोधित्वकल्पनात्, श्रवणादिकं विना सगुणोपासनमहिम्नैव तत्त्वज्ञानोदयोपगमे देवताधिकरणविरोधाच्च । तदधिकरणे हि दे-वादीनां शरीराद्यभावात्सगुणब्रह्मोपासनेषु निर्गुणब्रह्मविद्यासाधन-

श्रवणादिषु च नास्ति सामर्थ्यम्. अतो न तेष्वधिकार इति पूर्वपक्षयित्वा मन्त्रार्थवादेतिहासपुराणप्रामाण्यात्तेषामपि शरीरादिसद्भावादस्त्यधिकार इति सिद्धान्तितम्। तत्रेदं पूर्वपक्षप्रयोजनमुक्तम्— देवादीनां श्रवणाद्यधिकाराभावे क्रममुक्तिफलकब्रह्मोपासनया प्राप्तदेवभावस्यापि श्रवणाद्यसंभवेन विद्योदयासंभवात्पुनरावृत्त्यापत्तौ क्रममुक्तिकामस्य सगुणोपासनेषु प्रवृत्त्यसंभव इति। सिद्धान्ते तु देवादीनां श्रवणाद्यधिकारसत्त्वादुक्तप्रवृत्तिसिद्धिरिति प्रयोजनं दर्शितम्. इदं च प्रयोजनं देवताधिकरणावसानभाष्ये संग्रहेण दर्शितम्। तथा च भाष्यम्— ‘ततश्चार्थित्वादिसंभवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः। क्रममुक्तिदर्शनान्यप्येवमेवोपपद्यन्ते’ इति। एवमेवेत्यस्य देवादीनां श्रवणाद्यधिकारे सत्येवेत्यर्थः। तेषां श्रवणाद्यधिकारे यानि श्रौतलिङ्गानि पूर्वमुपन्यस्तानि ‘तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणामेकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास’ इत्येवमादीनि, तानि यथोपपद्यन्ते तथेत्यपिशब्दार्थः। ननु सगुणब्रह्मोपासकानामपि सर्वेषां श्रवणादिनैव ज्ञानोदय इति नियमो नास्ति. सगुणोपासकस्यापि हिरण्यगर्भस्य बृहदारण्यकभाष्ये पुरुषविधब्राह्मणव्याख्यानावसरे श्रवणादीनां प्रणिपातादीनां चाभावेऽपि ज्ञानजन्मप्रतिपादनादिति चेत्, न। हिरण्यगर्भस्यापि वामदेववज्जन्मान्तरीयश्रवणादिनैव ज्ञानजन्मसंभवात्, तत्रैव भाष्ये ‘श्रवणमनननिदिध्यासनानां साक्षाज्ज्ञेयविषयत्वात्’ इति वाक्ये साक्षात्पदेन श्रवणादेर्ज्ञेयब्रह्मव्यञ्जकस्य प्रणिपाताद्यपेक्षयावश्यकत्वसूच-

नेन जन्मान्तरीयश्रवणादिकल्पनस्य तद्भाष्यवाक्याभिप्रेतत्वेऽवगम्यमाने सति तत्पूर्वभाष्ये श्रवणादिकं विना कार्यकरणशुद्ध्यादिमात्रेण ज्ञानजन्मप्रतिपादनस्याभ्युपगमवादत्वोपपत्तेर्हिरण्यगर्भस्य वामदेवादेरिव जन्मान्तरीये ज्ञानसाधने कल्पनीये सति क्लृप्तश्रवणादिकल्पनस्यैव न्याय्यत्वाच्च । न च हिरण्यगर्भस्य पूर्वजन्मनि सगुणोपासनानिष्ठत्वेन निर्गुणविचारो न संभवतीति वाच्यम् । हिरण्यगर्भस्य पूर्वकल्पे जन्मभेदेन सगुणनिर्गुणोपासनयोः संभवात् । न ह्येकस्मिञ्जन्मनि कृतात्सगुणोपासनामात्रादेव हैरण्यगर्भपदप्राप्तिरस्ति, तथा सति सगुणोपासकानामेव सर्वेषां साक्षाद्धिरण्यगर्भत्वप्रसङ्गात् । किं तु हिरण्यगर्भस्य ब्रह्मलोकस्वामित्वं सरस्वतीभर्तृत्वं जन्मप्रभृति तत्त्वसाक्षात्कारसंपन्नत्वं सर्वज्ञत्वं सकलभौतिकजगत्सृष्ट्यादिसामर्थ्यं भक्तानां त्रैलोक्यैश्वर्यप्रदानसामर्थ्यं कार्यविशेषेषु शिवविष्ण्वादिप्रवर्तकत्वं ललाटाद्रुद्रप्रादुर्भावहेतुत्वं महाविष्णुनाभिकमलजातत्वाद्यैश्वर्यं च श्रुत्यादिभ्यो निश्चित्यागामिकल्पे यथाहिरण्यगर्भत्वाय तत्साधनानि सगुणनिर्गुणोपासनानि तपोविशेषरूपाणि च बहुषु जन्मसु ध्रुवप्रह्लादविश्वामित्रागस्त्यभृग्वादिवदनुष्ठितवतो महापुरुषस्य कस्यचिदेव निरतिशयेश्वरप्रसादाद्धिरण्यगर्भत्वं संपद्यत इति हिरण्यगर्भस्यापि जन्मान्तरीयश्रवणकल्पनं वामदेवस्येव नानुपपन्नम् । हिरण्यगर्भस्य पूर्वजन्मन्यनुष्ठितश्रवणादेर्हिरण्यगर्भपदप्राप्तिकामनया प्रतिबद्धत्वेन तदा तत्त्वसाक्षात्कारानुत्पादकत्वोपपत्तेः । तदुक्तं वृद्धैः—'ब्रह्मलोकाभिवाञ्छायां सम्यक्सत्यां निरुध्य ताम् । विचारयेद्य आत्मानं ननु साक्षात्करोत्ययम्' इति । न

च ज्ञानोत्पत्तिस्थले सर्वत्र श्रवणादिनियमो नास्ति, योगमार्गे प्रवृत्तस्य श्रवणाद्यभावेऽपि तत्त्वसाक्षात्कारोदयस्वीकारादिति वाच्यम्। 'ओमित्यात्मान युञ्जीत' 'ओमित्येवं ध्यायथ आत्मानम्' इत्यादिध्यानविधिबलेन 'तत्कारण सांख्ययोगाभिपन्नं विद्यामेतां योगविधि च कृत्स्न' इत्यादिश्रौतलिङ्गसहकृतेन विचारासमर्थस्य योगमार्गेऽधिकार इति तृतीयपरिच्छेदे वक्ष्यमाणतया विचारसमर्थस्य विचारं विना ज्ञानोत्पत्त्यनभ्युपगमात्। एव यद्यत्साधनमदृष्टद्वारा तत्त्वज्ञानसाधनत्वेन शास्त्रसिद्धं तत्सर्वं स गुणोपासनवदृष्टसामग्रीभूतसांख्यमार्गेण तदशक्तौ योगमार्गेण वा तत्त्वज्ञानसाधनमिति कल्प्यते। न त्वदृष्टमात्राज्ज्ञानलाभ कल्पयितुं युक्तः। अन्यथा जीवनादृष्टमात्रादेव स्तन्यपानादिप्रवृत्तिकल्पनापत्त्या तत्रापीष्टसाधनतास्मरणं जन्मान्तरीयसंस्कारहेतुक सर्वसंप्रतिपन्नं न कल्पनीयं स्यात्, क्लृप्तदृष्टकारणं विना कार्योत्पत्त्ययोगस्योभयत्र तुल्यत्वात्। अत एव पञ्चदश्या तत्त्वज्ञानं प्रति मार्गद्वयनियम उक्तः— सांख्ययोगौ प्रकृत्य 'इति मार्गौ विचार्याथ जगाद परमेश्वरः' इति। सग्रहकर्तापि तृतीयपरिच्छेदे सांख्ययोगशब्दितं मार्गद्वयमेव विद्यावाप्त्युपायत्वेन वक्ष्यति— 'एव श्रवणमननादिसाधनानुष्ठानप्रवणस्य विद्यावाप्तिरित्यस्मिन्नर्थे सर्वसंप्रतिपन्ने स्थिते, भारतीतीर्था ध्यानदीपे विद्यावाप्तावुपायान्तरमप्याहुः' इति ग्रन्थेन। तदयं निष्कर्षः— विद्याधिकारिणो विचारसमर्थस्य प्रतिषेधाभावे वेदान्तश्रवणमनुष्ठेयम्। सति तु प्रतिषेध इतिहासपुराणभाषाप्रबन्धादिश्रवणमनुष्ठेयम्। विद्याधिकारि-

रत्वमात्रेण तत्र विधित्वव्यवहारात् । एवं च श्रवणवि-
ध्यभावात्कर्मकाण्डविचारवद्ब्रह्मकाण्डविचारोऽप्यध्ययन-
विधिमूल इत्याचार्यवाचस्पतिपक्षानुसारिणः ॥

विचार्यस्य च ब्रह्मणो जगज्जन्मस्थितिलयकारणत्वं
लक्षणमुक्तम् 'यतो वा इमानि भूतानि जायन्ते' इत्या-

---

णो विचारासमर्थस्य तु त्रैवर्णिकस्य योगशब्दितं निर्गुणोपासनम-
नुष्ठेयम् । मार्गद्वयासंभवे च तत्संभवयोग्यजन्मप्राप्त्या तदन्यतरानु-
ष्ठानद्वारा ज्ञानलाभ इति । तथा च श्रवणाधिकारिणि श्रवणस्य
नित्यप्राप्तत्वात्तत्तुल्यकक्ष्यतया साधनान्तरस्य कस्यचिद्विकल्प्य
मसमुच्चित्य वा प्राप्त्यभावान्न तत्र विध्यवकाश इति सिद्धम् । एवं
ब्रह्मसाक्षात्कारं प्रति श्रवणादेर्नित्यप्राप्तत्वाद्विधिं विनैव श्रवणाद्यनु-
ष्ठानं सिध्यतीति प्रतिपादितम् । इदानीं श्रवणाद्यनुष्ठापकविध्यपेक्षा-
यामपि यथा कर्मकाण्डश्रवणम् 'कर्मवाक्यविचारः कर्तव्यः' इति
पृथग्विध्यभावेऽप्यध्ययनविधिबलादेव सिध्यति, एवं वेदान्तश्रवण-
मपि तद्बलादेव सिध्यतीति न श्रोतव्यवाक्ये पृथग्विचारविध्यपे-
क्षास्तीत्याशयेनोपसंहरति— **एवं चेति** । लोकत एव श्रवणादेः
प्राप्तत्वे सति श्रवणविध्यपेक्षाभावादित्यक्षरार्थः ।

श्रोतव्यवाक्यार्थविचारेण प्रथमसूत्रार्थः संगृहीतः । क्रमप्राप्तं
द्वितीयसूत्रं संगृह्णाति— **विचार्यस्य चेति** । चकारोऽवधारणार्थः
सञ्श्रुत्येत्यनेन संबध्यते । श्रुत्यैव लक्षणमुक्तम्, न तु व्याप्त्यादि-

दिश्रुत्या । जगज्जन्मस्थितिलयेष्वेकैककारणत्वमप्यन-

लक्षणवत्पुरुषोत्प्रेक्षितमित्यर्थः । 'येन जातानि जीवन्ति, यत्प्रय-न्त्यभिसंविशन्ति तद्विजिज्ञासस्व, तद्ब्रह्म' इति वाक्यशेष आदि-पदार्थः । श्रुतौ 'यत' इति यच्छब्देन ब्रह्मवल्ल्यां निरूपितं सत्यज्ञानानन्दानन्तात्मकं ब्रह्म परिगृह्यते, सर्वनाम्नां प्रकृतप्रधान-परामर्शकत्वस्वाभाव्यात् । ततश्च यत्श्रुतिसामर्थ्यादेव ब्रह्मणः स-च्चिदानन्दस्वरूपात्मकं स्वरूपलक्षणं लभ्यते । पञ्चमी च प्रकृतित्वं हेतुत्वसामान्यं वा वक्ति । हेतुत्वसामान्यं च प्रकृतिकर्त्रुभयसाधारण-मित्यविशेषादभिन्ननिमित्तोपादानत्वरूपं लक्षणं लभ्यते । इदंश-ब्देन प्रत्यक्षाद्युपस्थितं सर्वमुच्यते । भूतशब्दश्च पृथिव्यादिमहाभू-तेषु प्राणिषु च रूढः । प्रकृते च विनिगमनाविरहेण रूढ्यो-रनुन्मेषाद्भवन्तीति व्युत्पत्त्या कार्यमात्रं भूतशब्देनोच्यते । जीवन्ति स्थितिं लभन्ते । प्रयन्ति लीयमानानि सन्ति यदभिसंविशन्ति येन तादात्म्यं गच्छन्तीति यावत् । तत्कारणं ब्रह्म तद्विजिज्ञासस्व विशेषेण सच्चिदानन्दैकरसपूर्णप्रत्यग्रूपेण ज्ञातुं साक्षात्कर्तुमिच्छ । इच्छामात्रेणोक्तसाक्षात्कारालाभात्सम्प्रत्ययेन विचारो लक्ष्यते । उक्तलक्षणमुखेन ब्रह्म विचारयेत्यर्थः । अत्र यतो भूतानि जायन्ते तद्ब्रह्म, येन जीवन्ति तद्ब्रह्म, यदभिसंविशन्ति तद्ब्रह्मेति श्रुतिपाठे सति जगज्जन्मकारणत्वं तत्स्थितिकारणत्वं तल्लयकारणत्वं च प्रत्ये-कमेव श्रुत्या ब्रह्मलक्षणमुक्तं स्यात् । न तु तथा पाठोऽस्ति । अतो जन्मादित्रितयकारणत्वं श्रुत्या लक्षणमुक्तमिति प्रतिभाति ।

**न्यगामित्वाल्लक्षणं भवितुमर्हतीति चेत्, सत्यम्। लक्षणत्रयमेवेदं परस्परनिरपेक्षम्। अत एव 'अत्ता चराच-**

---

तदाक्षिपति— **जगज्जन्मस्थितिलयेष्विति**। निर्धारणार्था सप्तमी। 'यतो भूतानि जायन्ते' इत्युपक्रम्य 'तद्ब्रह्म' इति श्रुत्या लक्ष्ये ब्रह्मणि कारणत्वस्य सत्त्वप्रतिपादनान्नासंभवः, 'तद्ब्रह्म' इत्येकवचनेन लक्ष्यब्रह्मव्यक्तेरेकत्वावगमान्नाव्याप्त्यवकाश इति दोषद्वयाभाव सिद्धं कृत्वातिव्याप्तिरपि नास्तीत्याह— **अनन्यगामित्वादिति**। ब्रह्मान्यगामित्वाभावादित्यर्थः। ननु प्रधानेऽतिव्याप्तिः, तस्य सांख्यैरुपादानत्वाभ्युपगमेनोपादानतया जगज्जन्महेतुत्वस्य स्थित्याधारतया स्थितिहेतुत्वस्य लयाधारतया लयहेतुत्वस्य च तत्रापि सत्त्वादिति चेत्, न। तत्तत्कर्तृत्वस्यापि लक्षणे विशेषणत्वेन विवक्षिततया जडे प्रधाने तदयोगात्। न च तत्तत्कर्तृत्वमेव प्रत्येकं लक्षणमस्तु, किं तदुपादानत्वरूपविशेष्येणेति वाच्यम्। अदृष्टद्वारा जगज्जन्मादिकर्तरि जीवेऽतिव्याप्तिवारकत्वात्परिच्छिन्नजीवस्य च तदुपादानत्वायोगात्। न च साक्षाज्जगज्जन्मकर्तृत्वं नियन्तृतया जगत्स्थितिहेतुत्वं सञ्जिहीर्षया जगत्संहर्तृत्वं च लक्षणमिति विवक्षायां जीवेऽतिव्याप्त्यभावादुपादानत्वरूपं विशेष्यं व्यर्थमेवेति वाच्यम्। तर्ह्युपादनत्वमपि पृथगेव लक्षणमस्तु। मायाया ब्रह्मोपादानतामात्रघटकत्वेन पृथगुपादानत्वाभावात्प्रधानादिकारणान्तरस्य चाप्रामाणिकत्वेनातिव्याप्त्यभावादिति भावः। प्रत्येकं लक्षणत्वसंभवमङ्गीकरोति— **सत्यमिति**। तर्हि श्रुत्या त्रितयकारणत्वं कथं

लक्षणमुक्तमित्याशङ्क्य श्रुतेरपि प्रत्येकलक्षण एव तात्पर्यम्, मेलनस्य प्रयोजनाभावादित्याशयेनाह— **लक्षणत्रयमेवेदमिति** । इदं जगत्कारणत्वं जन्मादीनां मध्ये एकैकनिरूपितं परस्परनिरपेक्षं सलक्षणत्रयमेव श्रुत्यभिमतम्, न तु त्रितयनिरूपितकारणत्वरूपमेकं लक्षणमित्यर्थः । त्रयपदमनेकपरं न तु त्रित्वनियमपरम्, ततोऽप्याधिक्यस्य शङ्कावसरे दर्शितत्वादिति बोध्यम् । जगत्संहर्तृत्वादेः प्रत्येकं ब्रह्मलक्षणत्वे सूत्रकारादिसंमतिमाह— **अत एवेति** । अत्रादिपदेनान्तर्याम्यधिकरणजगद्वाचित्वाधिकरणयोः संग्रहः । अयमर्थः । कठवल्ल्यां पठ्यते— 'यस्य ब्रह्म च क्षत्त्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥' इति । अत्र ब्रह्मक्षत्त्रयोः प्रयुक्त ओदनशब्दस्तावन्न मुख्यः, किं तु गौणः । लोके चौदनशब्दमुख्यार्थस्यादनीयत्वप्रसिद्धेरदनीयत्वेन गुणेन तयोरोदनशब्दः प्रवर्तते । तथा च यस्य ब्रह्मक्षत्त्रे ओदनवददनीये इत्युक्तौ यच्छब्दार्थस्यात्तृत्वं प्रतीयते । अनेनैवाभिप्रायेणोक्तं **सूत्रेऽत्तेति** । ओदनपदवाच्यार्थस्यादनीयत्वं द्विविधमस्ति— भुजिक्रियाकर्मत्वात्मकभोज्यत्वरूपमेकं विनाश्यत्वरूपमपरम् । परं तु भोज्यत्वगुणः प्रसिद्धो न तु विनाश्यत्वगुणः । गौणप्रयोगे च प्रसिद्धगुण एव गृह्यते । यथा 'अग्निर्माणवकः' इत्यत्राग्निगतशुचित्वादिगुण एवोपादीयते प्रसिद्धत्वान्न तु तद्गतोऽपि विनाशकत्वादिगुणः । एवं प्रकृतेऽपि लोकप्रसिद्धिबलाद्भोज्यत्वगुण एवौदनशब्दात्प्रतीयते । अस्ति च ब्रह्मक्षत्त्रयोरपि स्त्रीपिण्डरूपयोर्भोज्यत्वं पुमांसं प्रति । ब्रह्मक्षत्त्रयोश्च भोज्यत्वप्रतीतौ सत्यां तत्प्-

तिसंबन्धिनि यच्छब्दार्थे पूर्वं प्रतीतमत्तृत्वं भोक्तृत्वरूपं जीवलिङ्गं पर्यवस्यति। यदा त्वोदनपदस्य मृत्यूपसेचनपदसंनिधानाद्ब्रह्मक्षत्त्रयोर्विनाश्यत्वगुणः स्वीक्रियते न तु भोज्यत्वगुणः स्त्रीपिण्डरूपब्रह्मक्षत्त्रकर्मकभुजिक्रियाया मृत्योरुपसेचनत्वासंभवेन 'मृत्युर्यस्योपसेचनम्' इत्यंशस्यानन्वयप्रसङ्गात्, ब्रह्मक्षत्त्रयोर्विनाशने तु मृत्योः सहायत्वरूपमुपसेचनत्वमस्तीति न तदनन्वयप्रसक्तिः, तदा तत्प्रतिसंबन्धिनि यच्छब्दार्थे पूर्वं प्रतीतमत्तृत्वं संहर्तृत्वरूपं पर्यवस्यति। विनाश्यत्वगुणग्रहणपक्षे त्वयं विशेषो लभ्यते—लोके हि दध्यादिरूपमुपसेचनं स्वमिश्रितान्नादिनाशे साधनं दृष्टमिति मृत्यूपसेचनपदयोगबलात्समृत्युकस्य चराचरात्मकस्य जगतो विनाशनं प्रतीयते। तदनुसाराद्ब्रह्मक्षत्त्रपदयोरजहल्लक्षणया कृत्स्नजगत्परत्वं च प्रतीयते। तत्प्रतिसंबन्धिन्यपि यच्छब्दार्थे कृत्स्नजगत्संहर्तृत्वरूपं ब्रह्मलिङ्गं भाति। एवं स्थिते प्रथममदनीयत्वगुणयोगात्प्रतीतोऽत्ता किं जीव उत परमात्मेति संशयः। तत्र पूर्वपक्षः—जीव एव, लोकप्रसिद्ध्यनुसारेणात्तृत्वस्य भोक्तृत्वरूपताप्रतीतेः। न परमात्मा, 'अनश्नन्' इति वचनेन तस्य भोक्तृत्वनिषेधादिति। सिद्धान्तस्तु—अत्ता परमात्मा। कुतः, चराचरग्रहणात्, मृत्यूपसेचनपदानुरोधेन पूर्वोक्तरीत्यात्तृत्वस्य चराचरात्मकसकलजगत्संहर्तृत्वरूपत्वप्रतीतेः। न च परमात्मनोऽन्यस्य जगत्संहर्तृत्वं संभवति। न च लोकप्रसिद्धिबलादत्तृत्वं भोक्तृत्वरूपं भातीत्युक्तमिति वाच्यम्। तत्प्रसिद्ध्यपेक्षया वाक्यशेषाधीनविनाश्यत्वगुणप्रसिद्धेः शीघ्रतरत्वेन बलवत्त्वात्। अतोऽत्ता पर एवेति निर्णयः। स संहर्ता

परमेश्वरो यत्र निर्विशेषे भेदकल्पनया वर्तते तं निर्विशेषं परमात्मानमित्थेत्थं को वेद न कोऽपीति तस्य दुर्विज्ञेयत्वमुदाहृतमन्त्रचतुर्थपादेन विवक्षितमिति बोध्यम्। 'अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्।' 'य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति' इत्युपक्रम्य 'यः पृथिव्यां तिष्ठन्—' 'योऽप्सु तिष्ठन्—' इत्यादिना कांश्चित्पर्यायानुक्त्वा 'इत्यधिदैवतम्' इत्युपसंहृत्य पुनः 'यः सर्वेषु भूतेषु तिष्ठन्—' 'यः सर्वेषु लोकेषु—' 'यः सर्वेषु देवेषु—' 'यः सर्वेषु यज्ञेषु—' इत्यादयः केचन पर्यायाः काण्वमाध्यंदिनपाठभेदेनाम्नाताः। तत्राधिदैवादिषु देवतभूतलोकवेदयज्ञादिषु श्रुतोऽन्तर्यामी परमात्मा। कुतः। तद्धर्मव्यपदेशात्, तद्धर्मस्य परमात्मधर्मस्याविशेषेण सर्वास्थितिकर्तृत्वरूपसर्वनियन्तृत्वस्य 'येन जातानि जीवन्ति' इति श्रुतिसिद्धस्य वाक्योपक्रमे 'य इमं च लोकम्' इत्यादिना व्यपदेशात्। न जीवादिरन्तर्यामी, तस्योक्तधर्मासंभवादिति सूत्रार्थः। 'जगद्वाचित्वात्।' कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे बालाकिं ब्राह्मणं प्रत्यजातशत्रोर्वचनं श्रूयते— 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः पुरुषः' इति। अत्र वेदितव्यत्वेन श्रुतः पुरुषो जीवः परो वेति संशये, जीव इति पूर्वः पक्षः, पुरुषपदस्य जीवे रूढत्वात् 'पुण्यो वै पुण्येन कर्मणा भवति' 'कर्म हैव तदूचतुः' इत्यादौ वेदे, लोके च 'पुण्यकर्मायं यतः सुखी वर्तते' इत्यादौ कर्मपदस्य धर्मादौ प्रयोगदर्शनेन तत्र रूढत्वाच्च। ऊचतुरार्तभा-

रग्रहणात्' इत्याद्यधिकरणेषु सर्वसंहर्तृत्वादिकं प्रत्येकं ब्रह्मलिङ्गतयोपन्यस्तमिति कौमुदीकाराः ॥

---

गयाज्ञवल्क्यावित्यर्थ । कर्मसंबन्धी पुरुषो जीव एव । न परमात्मा, तस्य धर्माद्यभावात् । न च 'एतेषां पुरुषाणा कर्ता' इति वाक्येन वेदितव्यपुरुषस्य प्रकृतादित्यचन्द्रादिपुरुषकर्तृत्वमुच्यमानं जीवे कथं संभवतीति वाच्यम् । भोगोपकरणभूतानादित्यादिपुरुषान्प्रति भोक्तुर्जीवस्यादृष्टद्वारा कर्तृत्वोपपत्तेः । अत एव 'यस्य वैतत्कर्म' इति वाक्यं सगतम्, अदृष्टद्वारा प्रकृतपुरुषकर्तृत्वोपपादकत्वात्, इत्येवं प्राप्ते, सिद्धान्तः— कर्मशब्दस्य न धर्मादौ रूढिः, 'चलनात्मक कर्म' इति प्रसिद्ध्यनुरोधेन परिस्पन्दे तस्य रूढत्वात् । कथं तर्हि धर्मादौ तत्प्रयोगनिर्वाहः, विहितप्रतिषिद्धरूपदेहादिपरिस्पन्दजन्ये धर्मादौ लक्षणया प्रयोगोपपत्ते । न च देवताध्यानादिरूपमनोमात्रव्यापारजन्ये धर्मादौ परिस्पन्दजन्यत्वाभावेन लक्षणया प्रयोगेऽसति परिस्पन्द इव धर्मादावपि रूढिरपरिहार्येति वाच्यम् । तर्हि प्रकृते विनिगमनाविरहेण रूढ्योरनुन्मेषे सति क्रियत इति कर्मेति व्युत्पत्त्या कर्मपद कार्यमात्रमाह । एतत्पदमपि प्रत्यक्षाद्युपस्थितवस्तुमात्रमाह, प्रकृतस्य तत्परामर्शयोग्यस्य कस्यचिदभावात् । तथा चैतत्कृत्स्नं जगद्यस्य कर्म कार्यमित्यर्थलाभेन वेदितव्यपुरुषस्याशेषजगदुत्पत्तिकर्तृत्वं सिध्यति । तच्च ब्रह्मलिङ्गम् । आदित्यादिपुरुषकर्तृत्वमपि न मुख्यं जीवस्य संभवति, 'एतेषां पुरुषाणां कर्ता' इत्यत्र मुख्यकर्तृग्रहणसंभवे गौणकर्तृग्रहणायो-

अन्ये तु— जन्मकारणत्वस्य स्थितिकारणत्वस्य च

---

गात । न चाशेषजगत्कर्तृत्वोक्तौ तत एवादित्यादिकर्तृत्वस्यापि लाभात्पृथक्तदुक्तिर्व्यर्थेति वाच्यम । मन्त्रार्थवादादिष्वादित्यचन्द्रादिपुरुषाणा महामहिमसंकीर्तनेन तेषु संजातपरब्रह्मत्वभ्रान्तिनिवर्तकत्वेन पृथगुक्तिसाफल्यात् । पुरुषपदस्यापि न जीवे रूढि, पूरणात्पुरुष इति क्लृप्तयोगेनैव कृत्स्नजगद्व्यापिनि ब्रह्मणीव कृत्स्नशरीरव्यापिनि जीवेऽपि प्रयोगोपपत्त्या तत्र रूढेरकल्पनात् । तत्कल्पनेऽपि योगवद्रूढेरपि जीवब्रह्मसाधारणचैतन्यमात्रे कल्पनोपपत्तेश्च न पुरुषश्रुतिर्जीवपक्षपातिनी । श्रुतिपाठे क्वचित्पुरुषपदाश्रवणाच्च । तथा चायं सूत्रार्थो वेदितव्यः— पुरुषः परमात्मा, कृत्स्नजगत्कर्तृत्वात् । न च हेत्वसिद्धिः, कर्मपदस्य जगद्वाचित्वात् । तस्माद्वेदितव्यः पुरुषः परमात्मेति सिद्धम् । एवं च सर्वसंहर्तृत्वादिकमित्यत्रादिपदेनान्तर्याम्यधिकरणोक्त सर्वनियन्तृत्वरूपसर्वस्थितिकर्तृत्वं जगद्वाचित्वाधिकरणोक्तं सर्वजगदुत्पत्तिकर्तृत्व च गृह्यते ॥

ननु 'यतो वा—' इत्यादिश्रुत्या जीवव्यावृत्तेश्वरस्य तत्पदवाच्यस्य ब्रह्मणो लक्षणमुक्तमिति तात्पर्यवर्णनमयुक्तम्, 'तद्विजिज्ञासस्व तद्ब्रह्म' इति वाक्यशेषानुसारेण श्रुतेर्वाक्यार्थभूताद्वितीयजिज्ञास्यब्रह्मलक्षणप्रतिपादकत्वस्यैवावगमादित्याशङ्क्य श्रुतेस्तथाभूतब्रह्मलक्षणपरत्वमुपगच्छतां मतमाह— **अन्ये त्विति** । चेतनाचेतनात्मककृत्स्नभूतोपादानत्वप्रतिपत्तिर्हि ब्रह्मणोऽद्वितीय-

**निमित्तसाधारण्यादुपादानत्वप्रत्यायनाय प्रपञ्चस्य ब्रह्मणि लयो दर्शितः। अस्तु ब्रह्म जगदुपादानम्, तज्ज-**

---

यत्वबोधहेतुः। न च चेतनानां नित्यत्वात्कथं तदुपादानत्वं ब्रह्मण इति वाच्यम्। तेषा स्वरूपेण नित्यत्वेऽपि शरीरद्वयविशिष्टतया कार्यत्वोपगमात्। न चैवमपि ब्रह्मापेक्षया द्वितीयस्य तत्कार्यस्य जगत एव विद्यमानत्वात्कथं तदुपादानत्वमद्वितीयत्वप्रत्यायकमिति वाच्यम्। कार्यस्य ह्युपादानमेव वास्तवं स्वरूपम्, न तु तदतिरिक्त वास्तव स्वरूपमस्ति, नामरूपात्मकजगद्रूपं तु मिथ्याभूतमित्यारम्भणाद्यधिकरणेषु व्यवस्थापितत्वात्। अतः सर्वोपादानत्व सर्वस्य वास्तवं स्वरूपं ब्रह्मैवेति बोधनद्वारा ब्रह्मणो वास्तवाद्वितीयत्वबोधहेतुर्भवति। अद्वितीयब्रह्मबोधश्च मुक्तिहेतुरिति मुक्तिप्रयोजकब्रह्माद्वितीयत्वबोधहेतुभूतोपादानत्वप्रत्यायनार्थम् 'यत्प्रयन्त्यभिसंविशन्ति' इति श्रुतिभागेन ब्रह्मणि सर्वभूतलयो दर्शित इत्याह— **उपादानत्वेति**। ननु घटाद्युपादाने मृदादौ घटादिलयाधारत्ववज्जन्मादिकारणत्वस्यापि सत्त्वेन तद्बलादप्युपादानत्वप्रत्ययः स्यादिति, नेत्याह— **जन्मकारणत्वस्येति**। निमित्तं कुलालदण्डचक्रादि। तर्हि श्रुतौ जन्मादिकारणत्वप्रतिपादनं व्यर्थम्, लयमात्रप्रतिपादनादेवेष्टसिद्धेरिति, नेत्याह— **अस्त्विति**। घटजन्मन्युपादानमृदतिरिक्तकुलालवज्जगज्जन्मन्यप्युपादानब्रह्मापेक्षयान्यत्कर्तृरूप निमित्त भविष्यतीति भ्रमव्यवच्छेदाय तस्यैव ब्रह्मण एव श्रुतौ जगज्जननकर्तृत्वमुक्तम्। तथा राज्यस्थेमानि पाल-

**न्मनि घटजन्मनि कुलालवत्तत्स्थितौ राज्यस्थेमानि राजवच्चोपादानादन्यदेव निमित्तं भविष्यतीति शङ्काव्यवच्छेदाय तस्यैव जगज्जननजीवननियामकत्वमुक्तम्। तथा चैकमेव लक्षणमिदमभिन्ननिमित्तोपादानतयाद्वितीयं ब्रह्मोपलक्षयतीत्याहुः॥**

---

नरूपे पालनीयप्रजाद्युपादानातिरिक्तराजवज्जगतः स्थितौ जगदुपादानब्रह्मापेक्षयान्यन्निमित्तं नियन्तृतया स्थितिहेतुभूतं भविष्यतीति शङ्काव्यवच्छेदाय तस्यैव ब्रह्मणो जगज्जीवननियामकत्व श्रुत्योक्तमित्यर्थः। **तथा चेति**। जगज्जननजीवननियामकत्वाभ्यां जगदुपादानब्रह्मण एव तन्निमित्तत्वप्रतीतौ सिद्धायामित्यर्थः। इदं श्रुत्युक्तं लक्षणमेकं सदेवाभिन्ननिमित्तोपादानत्वे पर्यवस्यदद्वितीयं ब्रह्मोपलक्षयति ब्रह्मव्यतिरिक्तवस्त्वस्तित्वशङ्कानिराकरणद्वारेण ज्ञापयति, न तु प्रत्येकलक्षणं सदित्यर्थः। निमित्तं च तदुपादान चेति निमित्तोपादानम्, अभिन्नं च तन्निमित्तोपादानं चेति पुनः कर्मधारयः। आद्यकर्मधारयादेव निमित्तोपादानयोरभेदे सिद्धेऽपि पुनरभिन्नपदं कर्मधारयावगतोऽभेद ऐक्यलक्षण एव, न तु नीलोत्पलादौ गुणगुणिनोरिव तादात्म्यरूप इति ज्ञापनार्थमिति बोध्यम्॥

ननु 'यतः' इति पञ्चमीश्रुत्या सर्वभूतलयाधारत्वलिङ्गेन च निश्चित ब्रह्मण उपादानत्व प्रधानस्येव परिणामित्वरूप वा, पर-

**ब्रह्मणश्चोपादानत्वमद्वितीयकूटस्थचैतन्यरूपस्य न परमाणूनामिवारम्भकत्वरूपं न वा प्रकृतेरिव परिणामित्वरूपम्, किं त्वविद्यया वियदादिप्रपञ्चरूपेण विवर्तमानत्वलक्षणम्। वस्तुनस्तत्समसत्ताकोऽन्यथाभावः प-**

---

माणूनामिवारम्भकत्वरूपं वा, रज्ज्वादेरारोपितसर्पाद्युपादानस्येव जगद्रूपविवर्ताधिष्ठानत्वरूपं वा। तत्र नाद्यः, ब्रह्मणः कूटस्थत्वात्। परिणामवादे हि परिणामपरिणामिनोर्वास्तवाभेदस्वीकारेण ब्रह्मणः परिणामित्वे परिणामजन्मादयोऽपि ब्रह्मणि प्रसज्येरन्। तथा च जन्ममरणादिविकारशून्यत्वलक्षणं श्रुतिसिद्धं कूटस्थत्वं तस्य भज्येत। ततश्च कूटस्थत्वात्तस्य परिणामित्वं न संभवति। न द्वितीयः, अद्वितीयत्वाद्ब्रह्मणः। ब्रह्मण. सद्वितीयत्वे हि परमाणुद्वयसंयोगवदसमवायिकारणलाभसंभवादारम्भकत्वं भवेदित्याशयेनाह— **ब्रह्मणश्चेति**। तृतीय· प्रकारः परिशिष्यत इत्याह— **किं त्वित्यादिना**। ननु ब्रह्मतद्विवर्तप्रपञ्चयोरभेद· सिद्धान्त उपेयते, आरम्भवादे त्वारभ्यमारम्भकादत्यन्ताभिन्नमुपेयत इत्यारभ्यविवर्तयोर्भेदः स्पष्टः। सिद्धान्त इव परिणामवादेऽपि सांख्याद्यभिमते परिणामपरिणामिनोरभेदाभ्युपगमाद्विवर्तपरिणामयोर्भेदः कथमवगन्तव्य इत्याशङ्क्य लक्षणभेदादित्याह— **वस्तुन इति**। वस्तुन उपादानत्वाभिमतस्य। अन्यथा पूर्वरूपापेक्षया रूपान्तरेण भावो भवनमवस्थानमन्यथाभावः, अवस्थाविशेष इति यावत्। तत्समसत्ताकः, तेन वस्तुना समा सत्ता यस्यान्यथाभावस्य स

**रिणामस्तदसमसत्ताको विवर्त इति वा, कारणसलक्षणोऽन्यथाभावः परिणामस्तद्विलक्षणो विवर्त इति वा,**

---

तथा। तथा चोपादानत्वाभिमतवस्तुसत्तासमानसत्ताकत्वे सति तदवस्थाविशेषरूपत्व तत्परिणामत्वमिति परिणामलक्षण पर्यवस्यति । तत्र विवर्तवारणाय सत्यन्तम् । घटस्य तन्तुपरिणामत्ववारणाय विशेष्यम् । विवर्तलक्षणमाह— **तदिति** । **वस्तुनस्तद**-समसत्ताकोऽन्यथाभावो विवर्त इति संबन्धः । उपादानत्वाभिमतवस्तुसत्ताविषमसत्ताकत्वे सति तदवस्थाविशेषरूपत्व तद्विवर्तत्वमिति विवर्तलक्षणम् । उपादानत्वाभिमतमृद्वस्तुसत्ताविषमसत्ताकत्व चैतन्यस्याप्यस्तीति तस्य मृद्वस्तुविवर्तत्ववारणाय विशेष्यम् । परिणामवारणाय सत्यन्तम् । ब्रह्मचैतन्यस्य पारमार्थिकी सत्ता, घटादिप्रपञ्चस्य व्यावहारिकी सत्ता, शुक्तिरजतादेः प्रातिभासिकी सत्तेति सत्तात्रैविध्याङ्गीकारमते लक्षणभेद उक्तः । ब्रह्मणि घटादौ शुक्तिरजतादौ च सर्वत्र ब्रह्मस्वरूपभूतैकैव सत्ता, न तदतिरिक्तेतिमतसाधारण्येन लक्षणान्तरमाह— **कारणसलक्षण इति**। उपादानत्वाभिमतवस्तुसलक्षणत्वे सति तदवस्थाविशेषत्वं तत्परिणामत्वमिति परिणामलक्षणम् । अत्र सालक्षण्यं जडत्वरूपं बोध्यम् । परिणामपरिणामिनोर्जडत्वनियमान्न काप्यव्याप्तिः शङ्क्या । मृद्वस्तुनो घटपरिणामत्ववारणाय विशेष्यम् । प्रपञ्चस्य संवित्परिणामत्ववारणाय सत्यन्तम् । विवर्तलक्षणमाह— **तदिति** । उपादानत्वाभिमतवस्तुविलक्षणत्वे सति तदवस्थाविशेषत्वं तद्वि-

**कारणाभिन्नं कार्यं परिणामस्तदभेदं विनैव तद्व्यतिरेकेण दुर्वचं कार्यं विवर्त इति वा विवर्तपरिणामयोर्भेदः ॥**

---

वर्तत्वमिति विवर्तलक्षणम् । अत्र चित्त्वजडत्वरूपं वैलक्षण्य विवक्षितम् । वियदादिप्रपञ्चवच्छुक्तिरजतादेरपि तत्तदवच्छिन्नचैतन्य एवाध्यासाङ्गीकाराज्जडमात्रे चैतन्यविवर्ते तद्विलक्षणत्वमस्तीति लक्षणसंगतिः । उपादानत्वाभिमतजडविलक्षणे चैतन्ये जडविवर्तत्ववारणाय विशेष्यम् । मृत्परिणामे घटादौ मृद्विवर्तत्ववारणाय सत्यन्तम् । प्रकारान्तरेण विवर्तपरिणामयोर्लक्षणमाह— **कारणाभिन्नमिति** । कारणत्वाभिमतवस्त्वभिन्नत्वे सति तत्कार्यत्व तत्परिणामत्वम् । वियदादौ ब्रह्मकार्यत्वमस्ति तत्परिणामत्वं तु नास्तीति तद्वारणाय सत्यन्तम् । ब्रह्मप्रपञ्चयोरारोपिताभेदसत्त्वेऽपि लक्षणे विवक्षितस्य धर्मिद्वयसमानस्वभावाभेदस्याभावान्नातिव्याप्तिः । परिणामवादे मृदोऽपि घटाद्यभिन्नत्वमस्तीति तस्या घटादिपरिणामत्ववारणाय विशेष्यम् । **तदभेदमिति** । वस्तुतस्तदभेदं विनैवेत्यर्थः । व्यतिरेको भेदः । अस्मिँल्लक्षणे कार्यत्वमविवक्षितम्, अनाद्यविद्यादेरपि विवर्तत्वाङ्गीकारात् । यद्वा कार्यरूपस्यैव विवर्तस्येदं लक्षणम् । तथा चोपादानत्वाभिमतवस्तुनः सकाशाद्वस्तुतो भेदाभेदाभ्या दुर्निरूपत्वे सति कार्यत्वं कार्यरूपविवर्तलक्षणम् । अत्राविद्यां प्रत्युपादानत्वाभिमतचैतन्याद्वस्तुतो भेदाभेदाभ्या निरूपयितुमशक्यायामविद्यायामतिव्याप्ति-

वारणाय विशेष्यम् । आरम्भवाद उपादानादभेदेन दुर्निरूपे कार्येऽतिव्याप्तिवारणाय भेदेनेत्युक्तम् । परिणामवाद उपादानाद्भेदेन दुर्निरूपे कार्येऽतिव्याप्तिवारणायाभेदेनेत्युक्तम् । सिद्धान्ते कार्यकारणयोरभेदोपगमादसंभववारणाय वस्तुत इत्युक्तम् । ननु कार्यकारणयोर्वास्तवौ भेदाभेदौ कथं दुर्निरूपाविति, उच्यते— तत्र तयोर्भेदस्तावद्दुर्निरूपः, निम्नोन्नतादियुक्तमृद्वस्तुव्यतिरेकेण घटानुपलम्भात्संयोगविशेषयुक्ततन्त्वतिरेकेण पटानुपलम्भाच्च। 'मृद्घटः' 'तन्तवः पटः' 'सुवर्णं कुण्डलम्' इत्यादिसामानाधिकरण्याच्च । न हि वस्तुतो भिन्नयोः सामानाधिकरण्यप्रत्ययः संभवति । किं च कारकव्यापारात्पूर्वं मृदादौ घटादेः सत्त्वमभ्युपगन्तव्यम्, तदसत्त्वे शशशृङ्गादिवदुत्पत्त्यनुपपत्तेः । उत्पत्तिक्षणात्पूर्वमसतः कार्यस्योत्पत्तिक्रिया प्रति कर्तृत्वानुपपत्तेश्च, पूर्वसिद्धस्यैव कर्तृत्वदर्शनात् । उत्पत्तिक्षण उपादानेन सह कार्यस्य संबन्धानुपपत्तेश्च, पूर्वक्षणे कार्यस्यासिद्धत्वात् । पूर्वसिद्धयोरेव हि पश्चात्संबन्धसंभवः, अन्यथा शशशृङ्गादेरपि कारणसंबन्धस्य दुर्वारत्वात् । कारकव्यापारात्पूर्वं कार्यस्य तुच्छवैलक्षण्यानङ्गीकारे तद्वदेव पश्चादात्मलाभासंभवस्य दुर्वारत्वाच्च । सिद्धे च प्राक्कार्यस्य सत्त्वे प्राक्काले कार्यकारणयोर्भेदे मानाभावादभेदसिद्धौ पश्चादपि तयोरभेद एव स्वीकर्तव्य इति कार्यकारणाभेदवादिनः साङ्ख्यादयः । तद्भेदवादिनस्तार्किकादयस्तु वदन्ति— कार्यकारणयोरभेदो न संभवति, तद्भावविरोधात् । न हि तस्यैव तत्कार्यत्वं तत्कारणत्वं च संभवतीति । अर्थक्रियाभेदाभावप्रसङ्गाच्च । न हि

जलाहरणाद्यर्थक्रिया मृद्वस्तुन. सम्भवति, घटोत्पत्तेः प्रागपि तत्प्रसङ्गात्। नापि मृदोऽर्थक्रिया घटस्य संभवति, मृद्वद्घटस्यापि घटोत्पादकत्वप्रसङ्गात्। कार्यस्य कारकव्यापारात्पूर्वं सत्त्वे च कारकव्यापारवैयर्थ्यप्रसङ्गात्तदा मृद्वदेवोपलम्भप्रसङ्गाच्च । तदुक्तं पञ्चदश्याम्— 'स घटो न मृदो भिन्नो वियोगे सत्यनीक्षणात्। नाप्यभिन्नः पुरा पिण्डदशायामनवेक्षणात्॥' इति । वियोगे सति मृदः सकाशाद्बुद्ध्या विवेचने क्रियमाण इत्यर्थः । एव कार्यकारणयोर्भेदवादिभिरभेदवादिभिश्च दर्शितै. परस्पर प्रतिक्षेप्तुमशक्यैर्न्यायैः कार्यस्य कारणाद्भेदाभेदाभ्या प्रागुत्पत्तेः सत्त्वासत्त्वाभ्या च दुर्निरूपत्वात्तस्यानृतत्व सिद्धम् । कारणं तु कार्योत्पत्तेः पूर्वकाले कार्यकाले कार्यनाशकाले चानुवर्तमान कार्याद्भेदेन सत्त्वेन च निरूपयितु शक्यत्वात्सत्यमेव कार्यापेक्षया । एवं मृदादेरवान्तरकारणस्य तत्तत्कार्यापेक्षया सत्यत्वे सिद्धेऽपि परमार्थसत्यत्वं नोपेयते, श्रुत्या ब्रह्मव्यतिरिक्तस्य सर्वस्यैव बाधितत्वात् । ब्रह्मणस्तु परमार्थसत्यत्वं सर्वात्मना बाधशून्यत्वादभ्युपगम्यते । अत एव जगत्कारणस्य सत्यत्वे मृदादिसत्यत्व जगतो मिथ्यात्वे च मृदादिकार्यस्य घटादेरनृतत्व च दृष्टान्तत्वेन श्रुत्योपादीयते । तदुक्तं पञ्चदश्याम्— 'एवं मायामयत्वेन विकारस्यानृतात्मताम् । विकाराधारमृद्वस्तुसत्यत्वं चाब्रवीच्छ्रुतिः ॥' इति। विकारानृतत्वादौ पूर्वोक्तन्यायकलाप एवंशब्दार्थः । श्लोके दृष्टान्तत्वेनेति शेषः । उक्तं च भामतीनिबन्धने— 'तदनेन प्रमाणेन विकारजातस्यानिर्वाच्यतया सिद्धमनृतत्वं कारणस्य निर्वाच्यतया सिद्धं सत्यत्व

**अथ शुद्धं ब्रह्मोपादानमिष्यत ईश्वररूपं जीवरूपं वा ? अत्र संक्षेपशारीरकानुसारिणः केचिदाहुः— शुद्धमेवो-**

---

च 'मृत्तिकेत्येव सत्यम्' इत्यादिना प्रबन्धेन दृष्टान्ततयानुवदति श्रुतिः' इति। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्' इति श्रुतिरित्यर्थः। विकारो घटादिर्वाचा घटशरावादिरस्तीति शब्देन, आरभ्यते व्यवह्रियत इत्यारम्भणम्, वाचा व्यवह्रियत एव न वस्तुतोऽस्ति विकारः, तस्य दुर्निरूपत्वादिति भावः। कथं तर्हि मृद्वस्तुनः सकाशाद्घटादिर्जात इति कार्यकारणयोर्भेदव्यवहार इत्यत आह— नामधेयम्, भेदव्यवहारो नाममात्रमर्थशून्यः, यथा 'राहोः शिरः' 'पुरुषस्य चैतन्यम्' इति व्यवहारः। विकारवद्भेदोऽप्यनिर्वाच्य इति भावः। किं तर्हि सत्यम्, तत्राह—मृत्तिकेति। मृत्तिकेत्यनेन मृत्तिकात्वेन रूपेण घटशरावादिविकारेषु प्रतीयमानं कारणरूपं वस्तु सत्यम्। विकारसत्यत्वमेवकारेण व्यवच्छिद्यते। तत्प्रसिद्धं दुर्वचत्वं कारणाद्भेदाभेदाभ्यां कार्यस्येति॥

पृच्छति— **अथेति**। ननु वाक्यार्थभूतशुद्धब्रह्मण एव श्रुतौ लक्षणमुक्तम्, 'तद्विजिज्ञासस्व' **इति** वाक्यशेषे लक्षणीयस्य ब्रह्मणो जिज्ञास्यत्वाभिधानात्। तथा च निश्चितेऽर्थे प्रश्नानुपपत्तिरिति चेत्, न। यथा शुद्धस्य जिज्ञास्यत्वमेवं तत्त्वपदार्थभूतयोर्जीवेश्वरयोरपि शुद्धब्रह्मप्रतिपत्तिहेतुत्वेन जिज्ञास्यत्वमस्ति। तथा तयोरपि वक्ष्यमाणरीत्याभिन्ननिमित्तोपादानत्वं च संभवतीति जि-

पादानम्, जन्मादिसूत्रतद्भाष्ययोरुपादानत्वस्य ज्ञेयब्र-

---

ह्मास्यत्वकारणत्वयो. साधारणत्वेन प्रश्नोपपत्तेरिति भावः। 'जीव ईशो विशुद्धा चित्तथा जीवेशयोर्भिदा। अविद्या तच्चितोर्योगः षडस्माकमनादयः॥' इति संप्रदायविद्वचने चैतन्यत्रैविध्यस्यैव प्रसिद्धत्वात्तदनुसारेण त्रेधा प्रश्न·। सामान्यज्ञानस्य विशेषबुभुत्साहेतुत्वाद्ब्रह्मणः सामान्यरूपेणोपादानत्वज्ञानानन्तर्यमथशब्दार्थः। प्रश्नो वा तदर्थः। ईश्वररूपं जीवरूपं वा ब्रह्म नोपादानमित्येवकारार्थः। 'जन्माद्यस्य यतः' इति सूत्रम्। जन्मादिरस्येति बहुव्रीहिः। जन्मस्थितिभङ्गमन्यपदार्थः, 'जन्मादि' इति नपुंसकैकवचनेनान्यपदार्थे समाहारद्वन्द्वसूचनात्। अन्यपदार्थभूतजन्मस्थितिभङ्गेष्वितरेतरयोगद्वन्द्वाश्रयणे तु 'जन्मादय.—' इति सूत्रापत्तेः। जन्मन आदित्वं च जायमानपदार्थेषु स्थितिभङ्गावपेक्ष्य दृष्टमिति सूत्रे जन्मनः प्राथम्यरूपादित्वनिर्देशः। अस्येति सर्वनाम्ना सूत्रकर्तुर्बुद्धिस्थसकलप्रपञ्चनिर्देशः। षष्ठ्या च जगतो जन्मादेश्च संबन्धनिर्देश, यत इति कारणनिर्देशः। सूत्रे तत्पदाध्याहारः। पूर्वसूत्राद्ब्रह्मपदानुषङ्गः। तथा यतः कारणादस्य जगतो जन्मादि, तद्ब्रह्मेति सूत्रार्थः। **ज्ञेयब्रह्मेति**। वाक्यार्थभूतशुद्धब्रह्मण एव प्राधान्येन लक्षणीयत्वात्तस्यैव जन्मादिसूत्रे लक्षणमुच्यते। 'अथातो ब्रह्मजिज्ञासा' इति पूर्वसूत्रे शास्त्रविषयसमर्पकेण ब्रह्मपदेन शुद्धब्रह्मण एवोपात्तत्वेन तस्यैव लक्षणाकाङ्क्षणाच्चेति भावः। ननु 'आत्मन आकाशः संभूतः' 'सोऽ-

ह्मलक्षणत्वोक्तेः । तथा च 'आत्मन आकाशः संभूतः' इत्यादिकारणवाक्येषु शबलवाचिनामात्मादिशब्दानां शुद्धे लक्षणैवेति ॥

विवरणानुसारिणस्तु— 'यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥'

---

कामयत' 'यः सर्वज्ञ. सर्ववित्' इत्यादिकारणवाक्येष्वीश्वररूपब्रह्मणः कारणत्वमुच्यते । न शुद्धस्य, तस्य कामयितृत्वसर्वज्ञानकर्तृत्वाद्यनुपपत्तेः । अतस्तद्वाक्यगतात्मपदतत्पदसर्वज्ञादिपदानां शबलवाचित्वान्न कारणवाक्येभ्यः शुद्धस्योपादानत्वसिद्धिरिति, नेत्याह— **तथा चेति** । जन्मादिसूत्रतद्भाष्ययोः स्वारस्येन शुद्धस्योपादानत्वावगमे सतीत्यर्थः । लक्षणैव स्वीक्रियते । अतः कारणवाक्येभ्यः शुद्धस्य कारणत्वावगतिर्युक्तेति भावः ॥

'अथ शुद्धं ब्रह्मोपादानम्—' इत्यादिप्रश्ने द्वितीयपक्षमादाय प्रतिवचनमुत्थापयति— **विवरणेति** । यस्य प्रकृतस्य भूतयोनेः पूर्वमन्त्रोपात्तं तपो ज्ञानमयं स्वरूपज्ञानविकारो मायावृत्तिप्रतिबिम्बरूपमिति यावत्, तस्मात्सर्वज्ञाद्भूतयोनेः सकाशादेतत्संनिहितमपरकालीनं कार्यरूपमिति यावत् । ब्रह्म हिरण्यगर्भाख्यं जायत इति श्रुतेरीश्वररूपमेव ब्रह्मोपादानमिति संबन्धः । न शुद्धं जीवरूपं वेत्येवकारार्थः । सर्वज्ञत्वादीत्यादिपदेन सर्वविषयकामयितृत्वसर्वेश्वरत्वादीनि गृह्यन्ते । मायोपाधिनिरूपितबिम्बत्वविशिष्टं सर्व-

इति श्रुतेः सर्वज्ञत्वादिविशिष्टं मायाशबलमीश्वररूपमेव ब्रह्मोपादानम् । अत एव भाष्ये 'अन्तस्तद्धर्मोपदेशात्' 'सर्वत्र प्रसिद्धोपदेशात्' इत्याद्यधिकरणेषु 'सैवर्क्-त्साम तदुक्थं तद्यजुस्तद्ब्रह्म सर्वकर्मा सर्वकामः सर्व-गन्धः सर्वरसः' इत्यादिश्रुत्युक्तं सर्वोपादानत्वप्रयुक्तं सर्वात्मकत्वं जीवव्यावृत्तमीश्वरलिङ्गमित्युपवर्णितम् ।

---

ज्ञत्वादिगुणयुक्तं च यदीश्वररूपं ब्रह्मचैतन्यं तदेवोपादानमित्यर्थः। 'अथ शुद्ध ब्रह्मोपादानमिष्यते—' इति प्रश्नस्य प्रतिवचनावसर ईश्वररूपमेव ब्रह्मोपादानमित्येतावति वक्तव्ये तस्य मायाशबलत्व-विशेषणमीश्वरोऽपि शुद्धचैतन्यमेवेति भ्रान्तिनिरासार्थम् । तस्य सर्वज्ञत्वाद्यनेकविशेषणोपादान चेश्वररूपब्रह्मण उपादानत्वे 'यः सर्वज्ञ' इत्यादिकारणवाक्यानां सर्वेषामैककण्ठ्यप्रदर्शनार्थमिति मन्तव्यम् । जीवशुद्धब्रह्मव्यावृत्तेश्वररूपब्रह्मण उपादानत्वे भाष्य-संमतिमाह— **अत एवेति** । ईश्वररूपब्रह्मण एवोपादानत्वाभ्यु-पगमादेवेत्यर्थः । इत्यादिश्रुत्युक्तं सर्वोपादानत्वप्रयुक्तं सर्वात्मकत्व-मीश्वरलिङ्गमित्युपवर्णितं भाष्य इति संबन्धः । यस्य सर्वोपादा-नत्वं तस्य सर्वात्मकत्वम्, उपादानोपादेययोस्तादात्म्यात्, नान्य-स्येत्यविवादम् । यदि प्रतिबिम्बत्वविशिष्टचैतन्यरूपे जीवे बिम्ब-त्वविशिष्टचैतन्यरूप ईश्वरे च विशेष्यतयानुस्यूतशुद्धचैतन्यरूप-ब्रह्मणः सर्वोपादानत्वमिष्यते तदा तस्यैव सर्वात्मकत्वं स्यान्नेश्व-रस्येति सार्वात्म्यस्य भाष्ये जीवव्यावृत्तेश्वरलिङ्गत्वोपन्यासो न

जीवेश्वरानुस्यूतचैतन्यमात्रस्य सर्वोपादानत्वे तु न त-

---

स्यात्। न च विशेष्यभूतशुद्धब्रह्मगत सर्वात्मकत्वं बिम्बत्वविशिष्ट-चैतन्यरूपेश्वरलिङ्गतया भाष्ये वर्णितमिति वाच्यम्। तथा सति तस्य जीवव्यावृत्तत्व न स्यात्, विशेष्यधर्मस्य सर्वात्मकत्वस्येश्वरधर्मत्ववज्जीवधर्मत्वस्यापि सत्त्वादित्याशयेनाह— जीवेश्वरानुस्यूतेति। छान्दोग्ये श्रूयते— 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात्सर्व एव सुवर्णः' इत्युपक्रम्य 'तस्य ऋक्च साम च गेष्णौ' इत्युक्त्वोत्तरत्र 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैव ऋक्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म' इति चोक्त्वा 'तद्य इमे वीणायां गायन्त्येत ते गायन्ति' इति। अस्यार्थः— आदित्येऽन्तर्यः पुरुष शास्त्रतो दृश्यत एष हिरण्मयो ज्योतिर्मयः, स्वतः स्वप्रकाशचैतन्यस्वरूप इत्यर्थः। तस्योपासनार्थं शरीरमाह— हिरण्यश्मश्रुरित्यादिना। हिरण्यसुवर्णशब्दौ ज्योतिःपरौ। प्रणखं नखाग्रम्। आङभिव्याप्तौ। तस्य हिरण्मयपुरुषस्य ऋक्सामनी गेष्णौ परिमलोक्तरीत्या स्तुतिसाधनभूते इत्यर्थः। इदमृक्सामगेष्णत्वं समस्तऋक्सामस्तुत्यत्वरूपं हिरण्मयपुरुषविशेषणं तस्य वेद ऋक्सामस्तुत्यतया प्रसिद्धेन्द्राद्यात्मकत्वमादाय पर्यवस्यति। हिरण्मयपुरुषस्येन्द्रादिभ्यः सकाशाद्भिन्नत्वे तु तद्विशेषणं न सिध्यति, अन्यस्तुतेरन्यविषयकत्वायोगात्। तस्यैव पुरुषस्यादित्यस्थानवदुपासनार्थं स्थानान्तरमाह— य एषोऽन्तरक्षिणीति। सैव ऋगित्यादौ विधेयापेक्षया लिङ्गव्यत्यासः। स

एव ऋक् । स पुरुषः । साम सः । उक्थं सः । यजुः सः । ब्रह्म वेदः । ब्रह्मपदमृगाद्यतिरिक्तवेदपरम् । तथा च गेष्णवाक्येन सर्वदेवात्मकत्वमुक्तम् । 'सैव ऋक्–' इति वाक्येन सर्ववेदात्मकत्वमुक्तम् । तथा य इमे प्रसिद्धा गायका वीणाया लौकिकपुरुषं गायन्ति तेऽप्येतं प्रकृतं हिरण्मयं पुरुषं गायन्तीत्युक्त्येन्द्राद्यात्मकत्ववल्लौकिकपुरुषात्मकत्वमपि सिध्यति । तथा च सर्वदेवात्मकत्वसर्ववेदात्मकत्वसर्वलौकिकपुरुषात्मकत्वानि मिलित्वा सर्वात्मकत्वे पर्यवस्यन्ति, तिर्यगात्मकत्वस्याप्युक्तप्रायत्वात् । एवं स्थिते संशयः— आदित्येऽक्षिणि चान्तः श्रूयमाणो हिरण्मयः पुरुषो मण्डलाभिमानिदेवताविशेषो वा नित्यसिद्धः परमेश्वरो वेति । तत्र देवताविशेष एव हिरण्मयः पुरुषः, तस्य संसारित्वेन हिरण्यश्मश्रुत्वादिरूपवत्त्वोपपत्तेः सर्वात्मकत्वस्याप्युपासनार्थं तत्रारोपोपपत्तेश्च । न परमेश्वरः, तस्य शरीरासंभवादिति प्राप्तम् । एवं प्राप्ते, ब्रूमः— 'अन्तस्तद्धर्मोपदेशात्' इति । आदित्यादावन्तरवस्थितो हिरण्मयः पुरुषो नित्यसिद्धः परमेश्वर एव । कुतः, तद्धर्मस्य सर्वात्मकत्वस्य 'सैव ऋक्तत्साम' इत्यादावुपदेशात् । सर्वात्मकत्वं हीश्वरस्यैव धर्मः, तस्य सर्वोपादानत्वेन सर्वात्मकत्वोपपत्तेः । न च मुख्यसंभवे सत्यारोपकल्पना न्याय्या । परमेश्वरस्यापि साधकानुग्रहार्थमिच्छावशान्मायागतशुद्धसत्त्वांशपरिणामरूपशरीरसंभवात्, 'उमासहायं परमेश्वरं प्रभुम्' इत्यादिश्रुतिषु 'जन्म कर्म च मे दिव्यम्' इत्यादिस्मृतिषु च प्रसिद्धत्वाच्चेति निर्णयः । 'सर्वं खल्विदं ब्रह्म' इति प्रकृत्य 'स क्रतुं कुर्वीत'

इति वाक्येन क्रतुशब्दवाच्यमुपासनं विधायोपास्याकाङ्क्षाया पठ्यते— 'मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्ध सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदये' इति । अयमर्थः— मनोमयो मनःप्रधान. । प्राणः शरीरमस्येति प्राणशरीरः । भाश्चैतन्य रूपमस्येति भारूपः । सत्या अप्रतिहता. सकल्पाः सृष्ट्यादिगोचरा अस्य । आकाशवदात्मा व्यापकत्वनिर्लेपत्वसूक्ष्मत्वादियुक्त स्वरूपमस्य । सर्वाणि कर्माणि क्रियन्त इति व्युत्पत्त्या कार्याण्यस्य । यद्वा भूतगुणगन्धरसादिसंनिधानात्कर्मपद परिस्पन्दपरम् । सर्वे परिस्पन्दा अस्येत्यर्थः । सर्वे कामा इच्छारूपाः सुखविशेषरूपा वास्य । सर्वे गन्धाः पुण्यरूपा अस्य, 'पुण्यो गन्धः पृथिव्यां च' इति स्मृतेः । सर्वे रसा अस्य । इदं दृश्यं सर्वमभ्याभिमुख्येन तादात्म्येनात्तो व्याप्तः । वागेव वाकः, वाकोऽस्यास्तीति वाकी, न वाकी वागिन्द्रियशून्य इति यावत् । वाग्ग्रहणं कर्मेन्द्रियाणां मुख्यप्राणस्य चोपलक्षणम्, क्रियाशक्तिमत्त्वाविशेषात् । आदरः कामः, सोऽस्य नास्तीत्यनादरः । आदरनिषेधेन तत्परिणामि मनो निषिद्धं भवति । मनोनिषेधेन च ज्ञानेन्द्रियाणां निषेधः सिद्धो भवति, ज्ञानशक्तिमत्त्वाविशेषात् । अत्र परिस्पन्देच्छागन्धरसवत्त्व तदाश्रयैर्वायुमनःपृथिवीजलैर्भूतविशेषैस्तादात्म्यं विना न संभवतीति सर्वकर्मत्वादिवचनेनाविशेषेण सर्वतादात्म्यप्रतिपादकसर्वमिदमभ्यात्त इति वचनेन च मनोमयत्वादिगुणकस्य सर्वात्मकत्वं प्रतीयते । तच्च ब्रह्मण एवोपपद्यते, तस्य सर्वोपादानत्वेन

ज्जीवव्यावृत्तमीश्वरलिङ्गं स्यात्। संक्षेपशारीरके शबलो पादानत्वनिराकरणमपि मायाविशिष्टोपादानत्वनिराकरणाभिप्रायम्, न तु निष्कृष्टेश्वररूपचैतन्योपादानत्वनि-

---

सर्वात्मकत्वोपपत्तेः। न जीवो मनोमयत्वादिगुणकः, तस्य सार्वात्म्यासंभवात्। न च मनोमयत्वप्राणशरीरत्वयोर्जीवधर्मयोर्ब्रह्मण्यसंभव इति वाच्यम्। भूततादात्म्येन गन्धादिमत्त्ववज्जीवतादात्म्येन मनोमयत्वाद्युपपत्तेरिति। सूत्रार्थस्तु— मनोमयत्वादिगुणकं ब्रह्मैवेहोपास्यत्वेन निर्दिश्यते। कुत, सर्वत्र वेदान्तेषु प्रसिद्धस्य ब्रह्मणः 'सर्वं खल्विदं ब्रह्म' इति पूर्ववाक्ये स्वशब्देनैवोपदेशात्, अस्मिन्नपि वाक्ये 'प्राणः शरीरमस्य' इत्यादिविग्रहवाक्येषु प्रकृतब्रह्माकर्षकसर्वनामश्रुतीनां सत्त्वाच्च ब्रह्मैव सगुणमुपास्यमत्रेति सिद्धम्। **सर्वोपादानत्वे त्विति**। शुद्धब्रह्मवज्जीवस्य सर्वोपादानत्वोपगमेऽपि सर्वात्मकत्वं जीवव्यावृत्तमीश्वरलिङ्गं न स्यादिति तुशब्दार्थः। ननु सङ्क्षेपशारीरके मायाशबलस्योपादानत्वं निरस्तमिति तद्विरोध इत्यत आह— **संक्षेपशारीरक इति**। मायाया अपि बिम्बभूतेश्वरविशेषणतयोपादानत्वाश्रयकोटौ निवेश एव तत्र दूषितः, न तु बिम्बत्वविशिष्टचैतन्यरूपेश्वरस्य तन्निरस्तमिति न तद्विरोध इत्यर्थः। ननु शबलस्योपादानत्वं निराकृत्य जगदुपादानत्वस्य ज्ञेयब्रह्मलक्षणत्वसमर्थनपरस्य संक्षेपशारीरकग्रन्थस्य कथमेवमभिप्रायः कल्पयितुं शक्यते, स्वरसतस्तस्य बिम्बप्रतिबिम्बानुगतशुद्धब्रह्मोपादानत्वप्रतिपादनपरत्वावगमादिति, नेत्याह— त-

राकरणपरम्, तत्रैव प्रथमाध्यायान्ते जगदुपादानत्वस्य तत्पदार्थवृत्तित्वोक्तेः। एवं चेश्वरगतमपि कारणत्वं तदनुगतमखण्डचैतन्यं शाखाचन्द्रमसमिव तटस्थतयोपलक्ष-

---

**यैवेति**। संक्षेपशारीरक एवेत्यर्थः। न च तत्पदार्थवृत्तित्वं तत्पदलक्ष्यार्थवृत्तित्वं विवक्षितम्, लक्ष्यार्थश्च शुद्धं ब्रह्मेति न संक्षेपशारीरकग्रन्थस्य पूर्वापरविरोधो न वा तेन बिम्बभूतेश्वरस्योपादानत्वलाभ इति वाच्यम्। लक्ष्यार्थत्वस्य वाक्यार्थसाधारणतया तत्पदार्थवृत्तित्वविशेषणवैयर्थ्यापत्तेः। अतस्तत्पदार्थवृत्तित्वं तत्पदवाच्यार्थवृत्तित्वमेव वक्तव्यमिति तदविरोधाय सर्वज्ञत्वादिगुणकस्येश्वरस्य जगत्कारणत्वप्रतिपादकबहुश्रुत्यविरोधाय च शबलोपादानत्वनिराकरणं मायाविशिष्टोपादानत्वनिराकरणरूपमेव वक्तव्यमिति न संक्षेपशारीरकविरोध इति भावः। तर्हि जन्मादिसूत्रतद्भाष्ययोर्ज्ञेयब्रह्मलक्षणत्वोक्तिविरोध इति नेत्याह— **एवं चेति**। अभिन्ननिमित्तोपादानत्वरूपलक्षणस्यान्तस्तद्धर्माद्यधिकरणभाष्यपर्यालोचनया बिम्बभूतेश्वरगतत्वे सिद्धे सतीत्यर्थः। अपिशब्दश्चैतन्यमित्यनेन संबध्यते। कारणत्वमित्यनन्तरमीश्वरमितरव्यावृत्ततया बोधयत्स्वादिति शेषः। **तदनुगतमिति**। बिम्बत्वविशिष्टचैतन्यरूपेश्वरानुगतमित्यर्थः। **अखण्डचैतन्यमिति**। विशेष्यभूतशुद्धचैतन्यमित्यर्थः। तटस्थत्वं च लक्ष्यस्वरूपबहिर्भूतत्वं वा लक्ष्यावृत्तिधर्मत्वं वोपलक्षणत्वं वा बोध्यम्। क चन्द्र इति प्रश्ने शाखायामित्युत्तरं भवति। तत्र यथा शाखा दिगन्तरगतनक्षत्र-

यितुं शक्नोतीति तस्य ज्ञेयब्रह्मलक्षणत्वोक्तिरिति मन्यन्ते ।

---

व्यावृत्तं चन्द्रमुपलक्षयति तथेश्वरगत कारणत्वमीश्वरमितरव्यावृत्ततया बोधयत्सत्तटस्थतयेश्वरानुगतमखण्डचैतन्यमपीतरव्यावृत्ततयोपलक्षयितुं शक्नोत्येवेत्यर्थः । ईश्वरगतेनाभिन्ननिमित्तोपादानत्वेन बिम्बत्वविशिष्टचैतन्यरूपस्येश्वरस्य जगदुपादानत्वसंभवशून्याज्जीवात्तत्कर्तृत्वसंभवरहितात्प्रधानादेश्च सकाशाद्व्यावृत्तौ गम्यमानायां सत्यां विशेष्यभूतज्ञेयब्रह्मणोऽपि प्रधानादिव्यावृत्तिर्गम्यत इत्यभिप्रेत्य तस्य ज्ञेयब्रह्मलक्षणत्वं जन्मादिसूत्रतद्भाष्ययोः सक्षेपशारीरके चोक्तमिति भावः। एवं तटस्थलक्षणेन प्रधानादिव्यावृत्तत्वेनावगतं ब्रह्म कीदृक्स्वरूपमिति विशेषजिज्ञासायां सत्या सत्यज्ञानानन्दात्मकं ब्रह्मेति स्वरूपलक्षणं प्रवर्तते । ' अनेनैवाभिप्रायेण भाष्यकारैरुक्तम्— 'तस्य च निर्णयवाक्यम् 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते'' इति । 'यतो वै' इत्यादिवाक्येन यस्मात्कारणादिमानि भूतानि जायन्त इत्युक्तम् , तद्वस्तुतः सत्यज्ञानानन्तस्वरूपादानन्दादेव नान्यस्मात्कारणादित्येतद्धि प्रसिद्धं पूर्ववल्ल्यामिति श्रुत्यर्थः । अनेन स्वरूपलक्षणेन बिम्बभूतेश्वरानुगत तत्पदलक्ष्यं वस्तुतो वाक्यार्थभूतं ज्ञेयं ब्रह्म विशेषतो निर्धारितं भवति । इयं च स्वरूपलक्षणविवक्षा मूलेऽखण्डपदेन सूचिता ॥

जगत्प्रकृतिभूतमायाप्रतिबिम्ब ईश्वरः । माया चेश्वराश्रिता । न च प्रतिबिम्बत्वस्य मायाकल्पितत्वात्तद्विशिष्टचैतन्याश्रितत्वं मायाया न सभवति, प्रतिबिम्बत्वकल्पनात्प्रागेव तस्याश्चैतन्याश्रि-

त्वस्य वक्तव्यत्वादिति वाच्यम् । मायावत्प्रतिबिम्बत्वस्याप्यनादित्वेन तस्यास्तद्विशिष्टचैतन्याश्रितत्वोपपत्तेः । वस्तुतो निर्विशेषचैतन्येऽनादिकालमारभ्य कल्पितप्रतिबिम्बत्वस्थितेरनिर्वचनीयमायाधीनत्वमात्रेण प्रतिबिम्बत्वस्य तत्कल्पितत्वम् । न तु प्रतिबिम्बत्वस्य वियदादेरिव मायापरिणामित्वमुपेयते, तथा सति प्रतिबिम्बभूतेश्वरस्य सादित्वप्रसङ्गात् । न च मायानादिकालमारभ्य चैतन्ये प्रतिबिम्बत्वं घटयन्ती तद्विशिष्टमेव चैतन्यमाश्रयत इति कथं संभावयितुं शक्यमिति वाच्यम् । मायाया अघटितघटनापटीयस्त्वात् । न च शुद्धचैतन्याश्रितैव माया तत्र प्रतिबिम्बभावं घटयतीति कुतो नाश्रीयत इति वाच्यम् । 'माया तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुतिविरोधात्, 'मायिनम्' इति पदेन मायाया ईश्वराश्रितत्वप्रतीतेः । जीवास्त्वविद्याप्रतिबिम्बाः, 'जीवेशावाभासेन करोति' इति श्रुतेः । प्रकृता मूलप्रकृतिः जीवेशौ प्रतिबिम्बरूपौ करोतीत्यर्थः । न ह्युपाधिभेदं विना प्रतिबिम्बभेदः संभवति । न चैकस्मिन्नपि दर्पणेऽनेकप्रतिबिम्बदर्शनात्प्रतिबिम्बभेद उपाधिभेदव्याप्यो न भवतीति वाच्यम् । एकस्मिन्दर्पणे बिम्बभेदेन प्रतिबिम्बभेदेऽपि सूर्यादिबिम्बैक्यस्थल उपाधिभेदं विना प्रतिबिम्बभेदादर्शनात्, बिम्बभूतचैतन्यस्य चैकत्वात् । तस्मादीश्वरोपाधिमायापेक्षया भिन्ना एव जीवोपाधिभूता अविद्याः स्वीकर्तव्याः । न च मूलप्रकृतिं प्रकृत्य प्रवृत्तायाम् 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' इति श्रुतौ जीवेशरूपप्रतिबिम्बाधारयोर्मायाऽविद्ययोः 'स्वयमेव' इत्यनेन

वियदादिप्रपञ्च ईश्वराश्रितमायापरिणाम इति तत्रे-

---

प्रकृतमूलप्रकृत्यात्मकत्वप्रतिपादन मायाऽविद्ययोर्भेदपेक्ष विरुध्यत इति वाच्यम् । मायाया वियदादिप्रकृतित्ववदविद्याया अपि लिङ्ग-शरीरादिप्रकृतित्वस्य वक्ष्यमाणत्वेन मायाऽविद्ये प्रकृतित्वेनैकीकृत्य 'स्वयमेव' इत्येकप्रकृत्यात्मकत्वप्रतिपादनस्याविरोधात् । 'अविद्या च' इत्येकवचनस्यापि जात्यभिप्रायत्वोपपत्तेर्न तन्नानात्वविरोधो-ऽपि, बिम्बैक्यस्थल उपाधिभेदं विना प्रतिबिम्बभेदासंभवस्य द-र्शितत्वात्प्रतिबिम्बजीवानां च नानात्वात् । अदृश्यत्वाधिकरण-भाष्येऽपि 'अव्याकृतम् .. ईश्वराश्रयं तस्यैवोपाधिभूतम्' इति मायाया ईश्वरोपाधित्वतदाश्रयत्वयोरुक्तत्वात् । तथानुमानिकाधि-करणभाष्ये 'मुक्ताना च न पुनरुत्पत्तिः, तस्या अविद्याबीजश-क्तेर्विद्यया दाहात्' इत्यत्र जीवनानात्वस्य तदुपाधिभूताविद्याना-नात्वस्य च स्पष्टमभिहितत्वात्, भामतीनिबन्धने तद्भाष्यस्य जी-वोपाधिभूताविद्यैक्यनिराकरणपरतयैव व्याख्यातत्वाच्च । 'आभास एव च' इति सूत्रतद्भाष्ययोर्जीवानां प्रतिबिम्बरूपतायाः स्पष्टम-भिहितत्वाच्च । तथा च मायाऽविद्याभेदः श्रुत्यादिसंमत इति ये मन्यन्ते तेषा मतमुपन्यस्यति— **वियदादिप्रपञ्च इत्यादिना** । पूर्वमत ईश्वररूपं ब्रह्मोपादानमित्युक्तम् । तत्सत्यमेव । परं तु क्वचिज्जगति जीवस्याप्युपादानत्वमभ्युपगन्तव्यमित्यभिप्रायेणास्य मतस्य प्रवृत्तिर्बोध्या । **ईश्वराश्रितमायापरिणाम इति** । 'मायां तु प्रकृतिं विद्यात्' इति श्रुतेरिति भावः । **तत्रेति** । वियदादावी-

श्वर उपादानम् । अन्तःकरणादिकं त्वीश्वराश्रितमाया-
परिणाममहाभूतोपसृष्टजीवाविद्याकृतभूतसूक्ष्मकार्यमिति
तत्रोभयोरुपादानत्वम् । अत एव 'एवमेवास्य परिद्र-
ष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं ग-
च्छन्ति' इति श्रुतौ कलाशब्दवाच्यानां प्राणमनःप्रभृ-
तीनां विदुषो विदेहकैवल्यसमये विद्यानिवर्त्याविद्याका-
र्यांशाभिप्रायेण विद्ययोच्छेदो दर्शितः, 'गताः कलाः
पञ्चदश प्रतिष्ठाः' इति श्रुत्यन्तरे तदनिवर्त्यमायाका-

---

श्वर एवोपादानमित्यर्थः । अन्तःकरणादौ तुशब्दसूचितं विशेषं दर्शयति— **ईश्वरेति** । भूतैरुपष्टम्भकलक्षणैः संसृष्टत्वं भूतोपसृष्टत्वम् । तच्च जीवाविद्याकृतानां भूतसूक्ष्माणां विशेषणम् । भूतानां सूक्ष्मत्वं परिच्छिन्नत्वम् । **अत एवेति** । अन्तःकरणादौ जीवाविद्यापरिणामसूक्ष्मभूतानां तदुपष्टम्भकतया मायापरिणाम-महाभूतानां चोपादानतया प्रविष्टत्वादेवेत्यर्थः । यथा गङ्गाद्या नद्यः समुद्रं प्राप्यास्तं गच्छन्ति, एवमेवास्य विदुषः परितः सर्वत्रा-त्मानं पूर्णं पश्यतः कला लिङ्गशरीरैकदेशभूताः पुरुषायणाः पुरु-षश्चिदात्मायनमधिष्ठानं यासां ताः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति पुरुषे लीयन्त इत्यर्थः । **दर्शित इति** । पुरुष इति शेषः । प्रतिष्ठा इति द्वितीयाबहुवचनम् । मायापरिणामात्मकमहा-भूतानीति द्वितीयाबहुवचनार्थः । पञ्चदश कलाः प्रतिष्ठाः प्रति-गताः, तासु लीना इति यावत् । **तदनिवर्त्येति** । ईश्वरोपाधि-

**र्वमहाभूतपरिणामरूपोपष्टम्भकांशाभिप्रायेण तेषां स्वस्वप्रकृतिषु लयो दर्शित इति मायाविद्याभेदवादिनः ॥**

---

भूतमायाया जीवगतविद्यानिवर्त्यत्वाभावादिति भावः । यदि कलानां जीवाविद्यामात्रपरिणामत्वं तदा तासामशेषतः पुरुष एव लयः स्यात् । तथा च तासा भूतेषु लयप्रतिपादकं वचन निर्विषयं स्यात् । अतो मायाकार्यमहाभूतानामपि लिङ्गशरीरोपादानत्वं वाच्यमिति तत्रोभयोरुपादानत्वे श्रुतिद्वयव्यवस्थासिद्धिरेव फलमित्यर्थः । न च मायायास्तत्त्वज्ञाननिवर्त्यत्वाभावे मिथ्यात्वसिद्धिर्न स्यादिति वाच्यम् । ब्रह्मणि सर्वदृश्यनिषेधश्रुतिबलाद्दृश्यत्वादिलिङ्गैश्च तन्मिथ्यात्वसिद्धेः । न च मायाया विद्यया निवृत्त्यभावे निवर्तकान्तराभावात्सर्वमुक्तावपि तदनुवृत्तिप्रसङ्ग इति वाच्यम् । महाप्रलयकाले सर्वप्राणिभोगप्रदकर्मणां युगपदुपरमे सतीश्वरसंकल्पमात्रादेव सर्वप्रपञ्चलयवत्सर्वमुक्तिकाल इत. परं सकार्याया मायायाः प्रयोजन नास्तीत्यनुसधानवत ईश्वरस्य सत्यसंकल्पस्य माया स्वकार्यैं सह मयि वस्तुतश्चिदेकरसे निःशेष लयं यात्वित्येवंरूपादेव मायापरिणामलक्षणसंकल्पात्तल्लयोपपत्तेः । श्रुतिस्मृतिपुराणादिषु तत्त्वज्ञानान्मायानिवृत्तिप्रतिपादकं ग्रन्थजातमविद्यानिवृत्त्यभिप्रायम् । यद्वा तत्त्वज्ञानमात्रमविद्याया इव मायाया निवर्तनयोग्यमपि नानाप्राणिकर्मप्रतिबन्धान्न तस्या निवर्तकम्, चरमं मुच्यमानस्यैव तत्त्वज्ञानं प्रतिबन्धकाभावात्तन्निवर्तकमित्यादि कल्पनीयमिति संक्षेपः ॥

यथा वियदादिप्रपञ्च ईश्वराश्रितमायापरिणाम इति तत्रेश्वर उपादानं तथान्तःकरणादिर्जीवाश्रिताविद्यामात्रपरिणाम इति तत्र जीव एवोपादानम् । न चान्तःकरणादौ मायाकार्यमहाभूतानामप्यननुप्रवेश उदाहृतश्रुतिद्वयव्यवस्थानुपपत्तिः, कलानां विद्ययोच्छेदश्रुतिस्तत्त्वविद्दृष्टिविषया 'गताः कलाः' इति श्रुतिस्तु म्रियमाणे तत्त्वविदि समीपवर्तिनः पुरुषा नश्यद्घटवत्तदीयशरीरादीनामपि भूम्यादिषु लयं मन्यन्त इति तटस्थपुरुषप्रतीतिविषयेति व्यवस्थायाः कलाप्रलयाधिकरणभाष्ये स्पष्टत्वादिति मायाविद्याभेदवादिष्वेकदेशिनः ॥

---

अन्त करणादावुभयोरुपादानत्वमसिद्धम्, श्रुतिद्वयव्यवस्थाया भाष्यकारैरेवान्यथा प्रतिपादितत्वादिति मतान्तर दर्शयति— **यथा वियदादीति** । तत्त्वविदो दृष्टिस्तत्त्वसाक्षात्कारः । अत्र दृष्टिपदेन तत्फलभूतः कलाक्षयो विवक्षितः । तद्विषया पुरुषे कलाप्रलयश्रुतिरित्यर्थः । भूतेषु कलाप्रलयवचनं तु कलानामपि मायापरिणाममहाभूतकार्यत्वभ्रमवतां भ्रान्तिसिद्धार्थानुवादकमिति भावः । चूर्णीभावपर्यन्तो घटनाशो यथा भूमौ दृश्यते तद्वन्मन्यन्त इत्यक्षरार्थः । **प्रतीतिविषयेति** । प्रतीतिरत्र भ्रान्तिरूपा । तद्विषयविषयिकेत्यर्थ । **स्पष्टत्वादिति** । 'तानि परे तथा ह्याह' इति तदधिकरणसूत्रम् । तानि मनआदीनि परे पुरुषे निरवशेषं

**तदभेदवादिष्वपि केचित्— यद्यपि वियदादिप्रपञ्चस्येश्वर उपादानं तथाप्यन्तःकरणादीनां जीवतादात्म्यप्रतीतेर्जीव एवोपादानम्। अत एवाध्यासभाष्येऽन्तःकरणादीनां जीव एवाध्यासो दर्शितः। विवरणे**

---

लीयन्ते। तथा हि श्रुतिराह 'एवमेवास्य' इत्याद्या श्रुतिर्निरवशेषं लयमाह हीति सूत्रार्थः। अन्त.करणादीनां मायाकार्यत्वाभाव ईश्वरस्यान्तःकरणाद्युपादानत्वप्रतिपादकश्रुतिविरोध इति दोषं सूचयति— **एकदेशिन इति** ॥

मायैवाविद्या, सा चेश्वरस्यैवोपाधिः, जीवानां तु प्रतिबिम्बरूपाणामन्तःकरणान्येवोपाधय इति मायाऽविद्ययोरभेदवादिनोऽपि केचिदन्तःकरणादौ जीवस्यैवोपादानत्वं तद्भेदवादिन इव वदन्तीत्याह— **तदभेदवादिष्वपीति**। अपिशब्दः क्वचिदशे पूर्वमतसाम्यार्थकः। तच्च साम्यं तथापीत्यादिना स्पष्टं भविष्यति। ननु वियदादिप्रपञ्चेऽपि जीव एवोपादान किं न स्यादित्यत आह— **यद्यपीति**। ईश्वराश्रितमायापरिणामत्वादीश्वर एव वियदादावुपादानं न जीव इत्यर्थः। ननु मायाऽविद्ययोरभेदोपगमेऽविद्यापरिणामान्तःकरणादीनामपीश्वराश्रितमायापरिणामत्वाविशेषादीश्वर एवान्तःकरणादावप्युपादानमिति वक्तुमुचितमिति, नेत्याह— **तथापीत्यादिना**। **जीवेति**। 'अहं कर्ता' 'अहं प्राणिमि' 'अहं काणः' 'अहं मूकः' 'अहं स्थूलः' इत्यादिप्रकारेणान्तः-

च प्रतिकर्मव्यवस्थायां ब्रह्मचैतन्यस्योपादानतया घटादिसङ्गित्वं जीवस्य तदसङ्गित्वेऽप्यन्तःकरणादिसङ्गित्वं

---

करणादीनां शरीरान्ताना जीवतादात्म्य प्रतीयते । तच्च तेषा जीवेऽध्यस्तत्वं विना न सम्भवतीति जीवस्यैव तदधिष्ठानत्वरूपमुपादानत्वम्, नेश्वरस्येत्यर्थ । प्रतिकर्मव्यवस्थायामिति । ब्रह्मणः स्वरूपचैतन्येन सर्वदा सर्वावभासकत्वरूपे सर्वज्ञत्व उक्त, तर्हि जीवस्यापि स्वरूपचैतन्येनैव सर्वदा सर्वद्रष्टृत्वमिति दोषप्रसक्तौ, जीवं प्रति विषयव्यवस्थाप्रतिपादकग्रन्थ इत्यर्थ. । ब्रह्मेति । बिम्बचैतन्यरूपब्रह्मणः सर्वोपादानतया घटादितादात्म्यरूपः संसर्गः क्लृप्त इत्यर्थः । अविद्याया व्यापकत्वेन तत्प्रतिबिम्बरूपजीवस्य व्यापकत्वेऽपि न घटादिभिस्तस्य तादात्म्यम्, उपादानत्वाभावात् । अन्तःकरणादिभिस्तु जीवस्य तादात्म्यलक्षण. संसर्गोऽस्तीति प्रतिपादित विवरण इत्यर्थः । अनेन जीवस्यान्तःकरणादावुपादानत्वमुक्त भवति । अन्यथा घटादिभिरिवान्तःकरणादिभिरप्युक्त सङ्गित्वं जीवस्य न स्यात्, उपादानत्वाभावाविशेषादिति भावः । अत्रान्त.करणादिपरिणाम्युपादानभूताया अविद्याया ईश्वराश्रितमायया सहाभेदाङ्गीकार ईश्वरस्यैवान्तःकरणादावुपादानत्वं वक्तुमुचितम् । यदि जीवतादात्म्यप्रतिपत्त्यादिभिरुक्तहेतुभिर्जीवस्यैवान्तःकरणादावुपादानत्वं वक्तव्यम्, तदान्त.करणादिपरिणामिभूताविद्याया जीवाश्रितत्वमीश्वराश्रितमायायाः सकाशाद्भिन्नत्व च वक्तव्यम्, कार्यात्मना परिणममानप्रकृत्याश्रयत्वातिरिक्तस्य चैतन्यग-

च वर्णितमित्याहुः ॥

'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥' इत्यादिश्रुतेः कृत्स्नस्य व्यावहारिकप्रपञ्चस्य ब्रह्मैवोपादानम् । जीवस्तु प्रातिभासिकस्य स्वप्नप्रपञ्चस्य । 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' इत्यधिकरणे ब्रह्मणो जगदुपादानत्वे तस्य कार्त्स्न्येन जगदाकारेण परिणामे विकारातिरेकेण ब्रह्माभावो वैकदेशेन परिणामे निरवयवत्व-

---

तोपादानत्वस्याभावात् । अतो मायाऽविद्ययोरभेदाङ्गीकारो जीवस्यैवान्त करणादावुपादानत्वाङ्गीकारश्च परस्परविरुद्ध इत्यस्वरसस्तदभेदवादिष्वपीत्यपिशब्देन सूचितः ॥

ईश्वरस्यान्तःकरणादावप्युपादानत्वमुपेत्यापि तस्य कार्यमात्र उपादानत्वं नास्तीति विशेष वक्तुं मतान्तरमवतारयति— **एतस्मादिति** । प्रकृतादीश्वरादित्यर्थः । प्रकृतित्वं पञ्चम्यर्थः । **जीवस्त्विति** । तुशब्दोऽवधारणार्थः । स्वप्नप्रपञ्चस्येत्यनन्तरमुपादानमित्यनुषङ्गः । किं कृत्स्नं ब्रह्म जगदाकारेण परिणमत एकदेशेन वा । नाद्य इत्याह— **तस्येति** । यथा दध्याकारेण परिणतस्य क्षीरस्य पूर्वरूपात्प्रच्युतिरेवं ब्रह्मणोऽपि स्वरूपात्प्रच्युतिः स्यादित्यर्थः । ब्रह्मण एकदेशः परिणमत इति द्वितीयकल्पं दूषयति—

श्रुतिविरोधो वा प्रसज्यत इति पूर्वपक्षे, 'आत्मनि चैवं विचित्राश्च हि' इति सूत्रेण विवर्तवादाभिप्रायेण स्वप्नदृशि जीवात्मनि स्वरूपानुपमर्देनानेकाकारस्वप्नप्रपञ्चसृष्टिवद्ब्रह्मणि वियदादिसृष्टिरुपपद्यत इति सिद्धान्तितत्वादित्यन्ये ॥

जीव एव स्वप्नद्रष्टृवत्स्वस्मिन्नीश्वरत्वादिसर्वकल्पक-

---

**एकदेशेनेति । पूर्वपक्ष इति ।** उभयथापि ब्रह्मण उपादानत्वं न सभवतीति पूर्वपक्षे प्राप्ते सतीत्यर्थः । यदि ब्रह्मण उपादानत्वं क्षीरपृथिव्यादिवत्परिणामित्वरूपमभ्युपगम्येत तदा कृत्स्नप्रसक्त्यादिदोषः प्रसज्येत । न तु तथाभ्युपगम्यते । किं तु रज्ज्वादेः सर्पाद्युपादानत्ववद्विवर्तोपादानत्व ब्रह्मण उपेयते । अतो नोक्तदोषावकाश इति सिद्धान्तयति— **आत्मनि चेति ।** एकश्चकारो यथाशब्दसमानार्थकः । द्वितीयश्चकारस्तथाशब्दसमानार्थक । हिशब्दो हेत्वर्थः । ततश्च यथात्मनि जीवे स्वप्नद्रष्टरि विचित्रा रथादिसृष्टयो जीवचैतन्यस्वरूपोपमर्दं विनैव भवन्ति स्वप्नावस्थानिवृत्त्यनन्तरमपि बुद्ध्यादिसाक्षितया जीवचैतन्यस्य यथापूर्वमवस्थानात्, एवं ब्रह्मणि तत्स्वरूपप्रच्युतिं विनैव विचित्रा वियदादिसृष्टयः संभवन्ति सृष्टिस्थितिसंहारेषु सच्चिदानन्दस्वरूपेण ब्रह्मानुवृत्तेः श्रुतिसिद्धत्वादिति सूत्रार्थः ॥

'अथ शुद्धं ब्रह्मोपादानम्' इत्यादिप्रश्ने तृतीयं पक्षमादाय

त्वेन सर्वकारणमित्यपि केचित् ॥

अथ 'मायां तु प्रकृतिं विद्यात्' इति श्रुतेर्मायाजा-

---

प्रतिवचनमवतारयति— जीव एवेति । परिपूर्णश्चिदात्माविद्यया-वच्छेदप्रतिबिम्बभावौ विनापि प्राप्तजीवभाव सन्नात्मानमेव सर्वेश्वरं कल्पयति । प्राप्तेश्वरभावात्स्वस्मादेव गगनादिसृष्टिं कल्पयति। स्वस्य स्वकल्पितादीश्वराद्भेदं तन्नियम्यत्वं च कल्पयति । तथा क्रमेण मनुष्यादिभावं कल्पयति । यथा वियदादिप्रपञ्चो व्यावहारिकसत्यः स्वप्नप्रपञ्च. प्रातिभासिक इति पक्षे स्वप्नद्रष्टा जीव एव देवतिर्यङ्मनुष्यादिभावेन तन्नियन्तृपरमेश्वररूपेण ततो भिन्नःश्वादिरूपेण चात्मान कल्पयति तद्वत् । तथा च स्वस्मिन्नेव सर्वप्रपञ्चकल्पकत्वाज्जीवभावापन्न ब्रह्म सर्वोपादानमिति दृष्टिसृष्टिवादिन आहुरित्यर्थ. । जीवभावापन्नस्य ब्रह्मणः सर्वोपादानत्वमित्यस्मिन्पक्षे जीवादधिकस्येश्वरस्याभावादीश्वरस्य सर्वजीवनियन्तृत्वप्रतिपादकश्रुतिस्मृतिन्यायसूत्रभाष्यादिविरोधो बन्धमोक्षव्यवस्थानुपपत्तिश्चेति दोषं सूचयति— इत्यपि केचिदिति । तथा च जीवेऽतिव्याप्त्यभावादीश्वररूपमेव ब्रह्म सर्वोपादानमिति स्थितम् ॥

इदानीं ब्रह्मलक्षणस्योपादानत्वस्यासभवमाशङ्कते— अथेति । श्रुतौ तुशब्दो मायाया' प्रकृतित्वमवधारयति । यथा मृदादिगतश्लक्ष्णत्वादेर्घटादावनुगमाद्धटादौ मृदादेरुपादानत्वं तथा मायागत जाड्यस्य जगत्यनुगमात्तस्यास्तदुपादानत्वमिति युक्तिमप्याह—

**ड्यस्य घटादिष्वनुगमाच्च माया जगदुपादानं प्रतीयते । कथं ब्रह्मोपादानम् । अत्राहुः पदार्थतत्त्वनिर्णयकाराः— ब्रह्म माया चेत्युभयमुपादानमित्युभयश्रुत्युपपत्तिः सत्ताजाड्यरूपोभयधर्मानुगत्युपपत्तिश्च । तत्र ब्रह्म विवर्तमानतयोपादानमविद्या परिणममानतया । न च वि-**

---

मायाजाड्यस्येति । **कथमिति** । ननु ब्रह्मण उपादानत्वं बहुश्रुत्युदाहरणेन पूर्वं दर्शितम् । सत्यं दर्शितम् । तत्तु न संभवति, निरवयवस्य तस्य मृदादेरिव परिणाम्युपादानत्वासंभवात् । न च विवर्तोपादानत्वं निरवयवस्यापि संभवति, गगनादौ नैल्याद्यारोपदर्शनादिति वाच्यम् । परिणामिष्विव विवर्ताधिष्ठानेषु लोक उपादानत्वप्रसिद्ध्यभावेन तत्रोपादानत्वाभ्युपगमस्य परिभाषामात्रत्वादित्याक्षेपाभिप्रायः । उपादानत्वघटितब्रह्मलक्षणस्यासंभवं निराचष्टे— **अत्राहुरित्यादिना** । **सत्तेति** । न च बाधायोग्यस्वरूपभूतायास्तस्या ब्रह्मस्वरूपत्वात्सत्तायास्तद्धर्मत्वोक्तिरयुक्तेति वाच्यम् । 'राहोः शिरः' इतिवद्भेदकल्पनया तद्धर्मत्वव्यवहारोपपत्तेरिति भावः । ननूपादानद्वयं व्यर्थमिति, नेत्याह— **तत्रेति** । यद्वा निरवयवस्य ब्रह्मण उपादानत्वमनुपपन्नमिति, नेत्याह— **तत्रेति** । मायाब्रह्मणोर्मध्य इत्यर्थः । आक्षेपाभिप्रायमनूद्य निराचष्टे— **न चेति** । मृदादिषु प्रसिद्धस्योपादानलक्षणस्य विवर्ताधिष्ठानेष्वपि सत्त्वात्तेषूपादानत्वाभ्युपगमस्य परिभाषामात्रत्वं नास्तीत्यर्थः

वर्ताधिष्ठाने पारिभाषिकमुपादानत्वम्, स्वात्मनि कार्यजनिहेतुत्वस्योपादानलक्षणस्य तत्राप्यविशेषादिति ॥

केचित्तूक्तामेव प्रक्रियामभ्युपगम्य विवर्तपरिणामोपादानद्वयसाधारणमन्यल्लक्षणमाहुः— स्वाभिन्नकार्यजनकत्वमुपादानत्वम् । अस्ति च प्रपञ्चस्य सद्रूपेण ब्रह्म-

---

**स्वात्मनीति** । अत्र स्वशब्द उपादानत्वाभिमतवस्तुपरः । तथा च कार्याधारत्वे सति कार्यजनिहेतुत्वमुपादानत्वम । निमित्तकारणवारणाय सत्यन्तम । भूतलादेरपि कार्याधारत्वात्तद्वारणाय विशेष्यम् । **तत्रापीति** । विवर्ताधिष्ठानेऽपीत्यर्थः ॥

**उक्तामेवेति** । प्रपञ्च उभयोरपि मायाब्रह्मणोरुपादानत्वम्, तत्र च परिणामितया मायाया उपादानत्वमधिष्ठानतया च ब्रह्मण उपादानत्वम, उभयोरुपादानत्वे श्रुतिन्याययोरुपपत्तिश्चेत्येतामित्यर्थः । **स्वाभिन्नेति** । स्वशब्देन घटाद्युपादानभूतं मृदादि जगत्परिणाम्युपादानभूतमज्ञानं जगद्विवर्तोपादानभूतं ब्रह्म च गृह्यते । तत्र घटादेर्मृदादेः सकाशादभेदः स्फुटः, मृदेव घट इत्यनुभवात् । अज्ञाने ब्रह्मणि च कार्यभेदमनुभवेन दर्शयति— **अस्ति चेति** । ननु 'मृद्घटः' इतिवत् 'ब्रह्म घटः' 'ब्रह्म पटः' इत्यनुभवो नास्ति । तथा 'अज्ञानं घटः' इत्याद्यनुभवोऽपि नास्ति । अतः प्रपञ्चस्याज्ञानेन ब्रह्मणा च कथमभेदोऽस्तीति शङ्कानिरासाय ब्रह्मणः सद्रूपत्वं विशेषणं दत्तमज्ञानस्य च जडत्वम । तथा च ब्रह्मा-

णा विवर्तमानेन जडेनाज्ञानेन परिणामिना चाभेदः, 'सन्घटः' 'जडो घटः' इति सामानाधिकरण्यानुभवात् । न च 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति

---

ज्ञानाभ्या सह ब्रह्मत्वाज्ञानत्वाकारेणाभेदानुभवाभावेऽपि सत्त्वजडत्वरूपेण ताभ्या सह प्रपञ्चस्याभेदानुभवोऽस्तीत्याह— **सन्घट इत्यादिना** । ननु घटोत्पत्तेः पूर्वं तत्कारणद्रव्यस्य मृत्त्वानुभवान्मृत्वस्य कारणधर्मत्वे सिद्धे सति 'मृद्घट' इति प्रत्यक्षानुभवः कार्यकारणद्रव्ययोरभेदावगाहीति युक्तम् । सत्त्वजडत्वयोस्तु कारणधर्मत्वे किं मान येन 'सन्घटः' 'जडो घटः' इत्यनुभवबलेन सद्रूपजडरूपाभ्यां ब्रह्माज्ञानाभ्यां प्रपञ्चस्याभेदः सिध्येदिति चेत्, उच्यते— ब्रह्मणः सद्रूपत्वम् 'सदेव' इत्यादिश्रुतिसिद्धम् । 'तदेतज्जडं मोहात्मकम्' इति श्रुत्याज्ञानस्य जडत्व सिद्धम् । तथा च घटादौ मृद्द्रव्याभेदान्मृत्त्वानुभववत्सद्रूपत्वादिरूपकारणद्रव्याभेदादेव प्रपञ्चे सत्त्वजडत्वानुभवोपपत्तौ पृथक्सत्त्वादिधर्मो नोपेयते । तथा च 'सन्घट.' 'जडो घट.' इत्याद्यनुभवोऽपि कार्यकारणद्रव्याभेदावगाहीति भावः । न च जडरूपाज्ञानस्य प्रपञ्चाभेदसिद्धावपि मायायाः किमायातमिति वाच्यम् । तयोरभेदाभ्युपगमादिति भावः । कार्यकारणयोरभेदाभ्युपगमेऽपसिद्धान्त शङ्कते— **न चेति** । तयोः कार्यकारणयोरनन्यत्वमभ्युपगन्तव्यम् । कुतः, आरम्भणशब्दादिभ्यः । वाचारम्भणश्रुतिरारम्भणशब्दार्थः । 'आत्मैवेदं सर्वम्' इत्यादिसार्वात्म्यप्रतिपादकश्रुति 'नेह नानास्ति

सूत्रे 'अनन्यत्वं व्यतिरेकेणाभावः' 'न खल्वनन्यत्व मित्यभेदं ब्रूमः, किं तु भेदं व्यासेधामः' इति भाष्य-

---

किंचन' इत्यादिनिषेधश्रुतिश्चादिपदार्थः। वाचारम्भणश्रुतिर्विवर्त-लक्षणकथनावसरे व्याख्याता। कार्यस्य कारणात्तत्त्वान्तरत्वे जगत्कारणस्य ब्रह्मण सर्वात्मकत्वश्रुतिरनुपपन्ना स्यात्। तथा ब्रह्मोपादानकस्य जगतः सत्यत्वे ब्रह्मणि जगन्निषेधो न स्यात्। अतः कारणीभूतब्रह्मानन्यत्वं प्रपञ्चस्याभ्युपगन्तव्यमिति भावः। ननु सौत्रानन्यत्वपदेन कार्यकारणयोरैक्य प्रतीयते। तदनुपपन्नम्, कार्यकारणभावविरोधाच्चिज्जडयोर्ब्रह्मप्रपञ्चयोरैक्यायोगाच्चेति शङ्कां निराकर्तुं सौत्रानन्यत्वपदं व्याचष्टे भाष्यकार.—**अनन्यत्व व्यतिरेकेणाभाव इति**। न च कारणव्यतिरेकेण कार्यस्याभावे कथं कार्यकारणभाव इति वाच्यम्। कारणसत्त्वव्यतिरेकेण कार्यसत्त्वाभावस्य विवक्षिततया कार्यस्वरूपापलापशङ्कानवकाशात्। सौत्रानन्यत्वपदतात्पर्यप्रदर्शकं भामतीनिबन्धनवाक्यमुदाहरति— **न खल्विति**। अनन्यत्वमिति पदेन कार्यकारणयोरभेदं न ब्रूमः। चेतनाचेतनयोरभेदानुपपत्तिस्तन्निषेधहेतुः खलुशब्देन द्योत्यते। तर्हि कारणब्रह्मविज्ञानात्सर्वविज्ञानं श्रुतिसिद्धं न संभवेत्, अभेदानभ्युपगमादिति शङ्कते—**किं त्विति**। परिहरति—**भेदमिति**। कार्यकारणयोः सत्त्वभेद व्यासेधाम इत्यर्थः। तथा च कारणब्रह्मस्वरूपभूतं सत्त्वमेव कार्यस्य वास्तवं स्वरूपमिति तस्मिन्विदिते तद्व्यतिरिक्तं सर्वं तत्त्वतो विदितं भवतीति नैकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधः।

भामतीनिबन्धनाभ्यां प्रपञ्चस्य ब्रह्माभेदनिषेधादभेदा-

न च ब्रह्मस्वरूपज्ञानेन सर्वप्रपञ्चस्य वास्तवस्वरूपे विदितेऽपि तत्तदसाधारणरूपज्ञानासंभवात्प्रतिज्ञाविरोधस्तदवस्थ एवेति वाच्यम् । 'आत्मनि विदिते सर्वं विदितं भवति' इत्यादिप्रतिज्ञावाक्येषु सर्वपदस्य सर्वतत्त्वपरत्वेन तत्तदसाधारणरूपेण सर्वज्ञानस्याविवक्षितत्वात् । न च तथा कल्पनाया किं विनिगमकमिति वाच्यम् । सर्वप्रपञ्चतत्त्वज्ञानमात्रेणाद्वितीयब्रह्मज्ञानस्य मुक्तिसाधनस्य लाभेन तत्तदसाधारणरूपज्ञाननैष्फल्यस्यैव विनिगमकत्वात् । कारणे ब्रह्मणि विदितेऽपि सर्वप्रपञ्चगततत्तदसाधारणरूपज्ञानस्यासंभवेन सर्वविज्ञानश्रुतेस्तत्परत्वे प्रामाण्याभावप्रसङ्गाच्च भेददर्शनस्यानर्थहेतुतया श्रुतिषु तत्र तत्र निन्दितत्वाच्च प्रतिज्ञाश्रुतेर्न नानारूपज्ञाने तात्पर्यम् । तदुक्तं पञ्चदश्याम्— 'अद्वैतेऽभिमुखीकर्तुमेवात्रैकस्य बोधतः । सर्वबोधः श्रुतो नैव नानात्वस्य विवक्षया ॥' इति । अस्यार्थः— अत्र वेदान्तेष्वेकस्य ब्रह्मणो बोधेन सर्वस्य प्रपञ्चस्य बोधोऽद्वैते ब्रह्मणि मुमुक्षुमभिमुखीकर्तुमेव मुमुक्षोरद्वितीयब्रह्मबोधार्थमेव श्रुत. । अद्वितीयब्रह्मबोधश्च सर्वस्य ब्रह्मैव वास्तवं स्वरूपमिति ज्ञानमात्रात्सिध्यतीति भावः । ननु 'ब्रह्मणि विदिते सर्वं विदितं भवति' इति श्रुतौ स्वरसतः प्रतीयमान तत्तदसाधारणरूपेण सर्वज्ञानमेव श्रुत्यर्थः किं न स्यादिति, नेत्याह— नैवेति । नानात्वबोधविवक्षया सर्वबोधो नैव श्रुत इति योजना । प्रयोजनाभावाद्बाधितत्वान्निन्दितत्वाच्चेति

भ्युपगमेऽपसिद्धान्त इति वाच्यम् । तयोर्ब्रह्मरूपधर्मिसमानसत्ताकाभेदनिषेधे तात्पर्येण शुक्तिरजतयोरिव प्रातीतिकाभेदाभ्युपगमे विरोधाभावादिति ॥

---

भावः । **तयोरिति** । भाष्यभामतीनिबन्धनयोरित्यर्थः । न च प्रपञ्चब्रह्मणोर्वास्तवाभेदनिषेधे सति वास्तवो भेदः स्यादिति वाच्यम् । भेदस्य वास्तवत्वं हि धर्मिप्रतियोगिनोर्वास्तवत्वापेक्षम्, तत्र ब्रह्मणो वास्तवत्वेऽपि प्रपञ्चस्यारम्भणशब्दादिभ्यो मिथ्यात्वावगमेन तयोर्भेदस्य सत्यत्वायोगादिति भावः । **प्रातीतिकेति** । यथा 'इदं रजतम्' इति भ्रान्तिसिद्धं रजतेदमर्थयोरभिन्नत्वं तथा 'सन्घटः इत्यादिभ्रान्तिसिद्धाभेदोपगमे सिद्धान्तविरोधाभावादिति भाव ॥

'माया तु प्रकृतिं विद्यात्' इति श्रुत्यावधारणार्थकतुशब्दवत्या मायाया एवोपादानत्वावगमेन ब्रह्मण उपादानत्वाभावादुपादानत्वघटितब्रह्मलक्षणस्यासंभवशङ्कायां सत्याम्, मायाब्रह्मणोरुभयोरपि प्रकृतित्वमस्ति श्रुतियुक्त्योरविशेषात्, 'माया तु' इति श्रुतौ तुशब्दो नावधारणार्थः किं तु सद्रूपब्रह्मापेक्षया मायाया वैलक्षण्यद्योतनार्थः, तच्च वैलक्षण्यं परिणामित्वरूपं प्रकृतित्वं मायाया इत्याशयवतां पदार्थतत्त्वनिर्णयकारादीनां मतभेदेन लक्षणासंभवशङ्का परिहृता । इदानीं ब्रह्मैवोपादानं न माया, अतो न लक्षणासंभवशङ्कावकाश इति मन्यमानानां मतद्वयमाह—

संक्षेपशारीरककृतस्तु— ब्रह्मैवोपादानम् । कूटस्थस्य

---

संक्षेपशारीरककृतस्त्वित्यादिना । तर्हि व्यर्था मायेति, नेत्याह—कूटस्थस्येति । यदि मायां विनैव ब्रह्मोपादान स्यात्तदा ब्रह्मणः स्वतः परिणामित्वमेव स्यात् । तथा च परिणामवादिभिः परिणामपरिणामिनोर्वास्तवाभेदाभ्युपगमात्परिणामस्य जन्मादिविकारैर्ब्रह्मापि विकारवदेव स्यात् । न चेष्टापत्तिरत्र वक्तु शक्यते, 'न जायते' इत्यादिबहुश्रुतिषु ब्रह्मणो जन्मादिविकारराहित्यरूपकूटस्थत्वप्रतिपादनविरोधात् । अतो मायाद्वारा ब्रह्मणः कारणत्वं वक्तव्यमिति न व्यर्था मायेत्यर्थः । यथा मृद्वस्तुन उपादानत्वेऽपि तद्गतश्लक्ष्णत्वादिसंस्कारो द्वारकारणम्, न ह्यसंस्कृतस्य मृद्वस्तुनो घटाद्युपादानत्वं घटते, तथा कूटस्थचैतन्यरूपे ब्रह्मणि समारोपिता माया तत्र जगत्प्रकृतित्वं घटयन्ती सहकारिकारणमुपेयत इति भावः । न च मायाया उपादानत्वाभावे 'मायां तु प्रकृतिं विद्यात्' इति श्रुतिविरोध इति वाच्यम् । ब्रह्मगतप्रकृतित्वनिर्वाहकतामात्रेण तस्यां प्रकृतित्वश्रुत्युपपत्तेः । मायायाः प्रकृतित्वनिर्वाहकत्वमात्र न स्वतः प्रकृतित्वमस्तीत्याशयेनैव तस्यां शक्तित्वव्यवहारः श्रुतौ दृश्यते— 'परास्य शक्तिर्विविधैव श्रूयते' इति । न हि मृदादिपदार्थगतशक्तेः किंचित्कार्य प्रत्युपादानत्वं प्रसिद्धं लोके । अत एव विनिगमकाभावान्मायाब्रह्मणोरुभयोरप्युपादानत्वमिति निरस्तम्, मायाया ब्रह्मशक्तित्वेन स्वत उपादानत्वासंभवात् । न च तस्याः प्रकृतित्वानुपगमे जगत. परिणा-

स्वतः कारणत्वानुपपत्तेर्माया द्वारकारणम् । अकारण-मपि द्वारं कार्येऽनुगच्छति, मृद इव तद्गतश्लक्ष्णत्वादे-रपि घटेऽनुगमदर्शनादित्याहुः ॥

वाचस्पतिमिश्रास्तु— जीवाश्रितमायाविषयीकृतं ब्रह्म स्वत एव जाड्याश्रयप्रपञ्चाकारेण विवर्तमानत-

---

म्युपादानं न स्यात्, ब्रह्मण' परिणामिताया. कूटस्थत्वविरोधे-नासकृत्प्रत्युक्तत्वादिति वाच्यम् । वाचस्पतिमत इव प्रपञ्चस्य चिदध्यस्तमायाविषयीकृतब्रह्मविवर्तत्वमात्राङ्गीकारोपपत्ते. । न च संक्षेपशारीरकग्रन्थे तत्र तत्र मायायाः परिणामित्वव्यवहारविरोध इति वाच्यम् । तथा व्यवहारस्य मतान्तराभिप्रायत्वोपपत्तेः । ननु जडभूतमायाप्रकृतिकत्वाभावे प्रपञ्चस्य जाड्यं न स्यादिति, ने-त्याह— **अकारणमपीति** । अनुपादानमपीत्यर्थः ॥

जगत्यनुगतं जाड्यं न कारणगुणः, किं तु जगत एव स्वा-भाविकम् । अतस्तात्सिद्धये मायाया उपादानत्वं कार्यानुगतद्वारका-रणत्वं वा न कल्पनीयमित्याशयेनाह— **वाचस्पतिमिश्रास्त्विति** । **जीवाश्रितेति** । नन्वक्षरब्राह्मण आकाशशब्दिताया मायाया अक्षरशब्दितनित्यचैतन्याश्रितत्वस्य प्रतिपादितत्वात्कथं तस्या जीवाश्रितत्वमुपेयते, 'मायिनं तु महेश्वरम्' इति श्रुतिविरोधाच्च । अत्र 'मायिनम्' इत्यनेन महेश्वरशब्दितब्रह्माश्रितत्वप्रतिपादनात् । किं च जीवस्य मायाश्रयत्वे तस्यैव जगदुपादानत्वं स्यात्,

येपादानमिति माया सहकारिमात्रम्, न कार्यानुगतं द्वारकारणमित्याहुः ॥

---

प्रपञ्चस्य मायापरिणामत्वात्प्रपञ्चपरिणामिमायाश्रयत्वं हि ब्रह्मणः प्रपञ्चोपादानत्वम् । जीवस्य मायाश्रयत्वे तु तस्यैव जगदुपादानत्वं स्यान्न ब्रह्मणः । किं च जीवाश्रितमायाविषयीकृतं ब्रह्मेति मते ब्रह्मण उपाध्यनङ्गीकारेण नियन्तृत्वजगत्कर्तृत्वादेरभावप्रसङ्गश्चेति चेत्, उच्यते— जीवाश्रितेति पदेन जीवत्वविशिष्टचैतन्याश्रितत्वं न विवक्षितं भवति, किं त्वक्षरब्राह्मणानुरोधेन चैतन्याश्रितत्वमेव । जीवत्वं तु मायापदवेदनीयाविद्याश्रयानन्ये वृत्तावनच्छेदकमिति जीवाश्रिता मायेत्युच्यते । न च जीवत्वस्यापि चैतन्ये वृत्तौ मायैवावच्छेदिका वाच्येति परस्पराश्रयप्रसङ्ग इति वाच्यम् । द्रव्यत्वगुणाश्रयत्वयोरिव परस्परस्थितिप्रयोजकतया परस्परापेक्षत्वलक्षणपरस्पराश्रयत्वस्यादोषत्वात् । परस्पराश्रयो ह्युत्पत्तौ ज्ञप्तौ वा दोषो भवेत् । स च प्रकृते नास्ति, अविद्याजीवत्वयोरनादित्वान्नित्यसाक्षिभास्यत्वाच्च । न च जीवत्वस्याविद्यास्थितिं प्रति नियामकत्वकल्पनं व्यर्थमिति वाच्यम् । ब्रह्मणि तस्याः स्थितिनिवारकत्वात् 'निरवद्यं निरञ्जनम्' इति श्रुत्या ब्रह्मणो निर्दोषत्वावगमेन तस्याविद्यारूपदोषाश्रयत्वानुपपत्तेः । न च वस्तुतो निर्दोषत्वपरा सा श्रुतिरिति वाच्यम् । तथा संकोचे मानाभावात्, ईश्वररूपब्रह्मवज्जीवस्यापि वस्तुतो निर्दोषत्वाच्च । न च 'मायिनं तु महेश्वरम्' इति श्रुतिविरोध, 'गृही धनी देवदत्तः' इत्यादौ

देवदत्तस्य गृहाद्याश्रयत्वाभावेऽपि प्रत्ययस्य स्वस्वामिभावलक्षणसंबन्धान्तरबोधकत्ववन्महेश्वरशब्दितब्रह्मणो मायाश्रयत्वाभावेऽपि मायाब्रह्मणोर्विषयविषयिभावलक्षणसंबन्धान्तरबोधकतया 'मायिनम्' इति श्रुत्युपपत्तेः। प्रपञ्चस्य च जीवाश्रितमायाविषयीकृतब्रह्मविवर्तत्वमात्राभ्युपगमान्न जीवस्य जगदुपादानत्वप्रसङ्गः। ब्रह्मण उपाध्यभावेऽपि सर्वनियन्तृत्वादि जीवाविद्याविषयीकृतब्रह्मविवर्ततया ब्रह्मधर्मत्वेनैव कल्प्यते। न जीवाविद्यापरिणामतया जीवधर्मत्वेन, अनुभवविरोधाद्ब्रह्मणि च सर्वनियन्तृत्वसर्वकर्तृत्वसर्वज्ञत्वादिप्रतिपादकशास्त्रस्य कल्पकस्य सत्त्वाच्च। तस्मात्सिद्धं जीवाश्रितमायाविषयीकृतं ब्रह्म प्रपञ्चाकारेण विवर्तमानतयोपादानमिति। उक्तं चारम्भणाधिकरणभाष्ये— 'मूलकारणमेवान्त्यात्कार्यात्तेन तेन कार्याकारेण नटवत्सर्वव्यवहारास्पदत्वं प्रतिपद्यते' इति। आन्त्यात्कार्यादिति। अन्त्यकार्यपर्यन्तमित्यर्थः। नटो हि द्रष्टृभिरविज्ञातनिजरूप एव तत्तदभिनेयासत्स्वरूपता प्रतिपद्यते, एवं जीवैरविज्ञाततत्त्वं सद्ब्रह्मासत्यवियदादिप्रपञ्चाकारता तद्द्वारा व्यवहारविषयतां च प्रतिपद्यत इति भाष्यार्थः। अत्र नटदृष्टान्तोक्त्या वाचस्पतिमतं भाष्याभिमतं निश्चीयते। तदुक्तं कल्पतरौ— 'अज्ञातनटवद्ब्रह्म कारणं शंकरोऽब्रवीत्। जीवाज्ञातं जगद्बीजं जगौ वाचस्पतिस्तथा॥' इति॥

इदानीं मायाया एव 'मायां तु प्रकृतिं विद्यात्' इति श्रुतिस्वारस्यानुरोधेन मुख्यमुपादानत्वमिति स्वीकृत्यापि ब्रह्मलक्षणासंभवं

सिद्धान्तमुक्तावलीकृतस्तु— मायाशक्तिरेवोपादानम् । न ब्रह्म, 'तदेतद्ब्रह्मापूर्वमनपरम्' 'न तस्य कार्यं करणं च विद्यते' इत्यादिश्रुतेः । जगदुपादानमायाधिष्ठानत्वेन तूपचारादुपादानम् । तादृशमेवोपादानत्वं लक्षणैर्विवक्षितमित्याहुः ॥

अथ क ईश्वरः कश्च जीवः । अत्रोक्तं प्रकटार्थविव-

---

परिहरति— सिद्धान्तमुक्तावलीकृतस्त्विति । तत्प्रकृतम् । एतद्बुद्ध्यादिसाक्षिरूपम् । पूर्वं कारणं न विद्यते यस्य तदपूर्वम् । अपरं कार्यं न विद्यते यस्य तदनपरम् । तस्य ब्रह्मणः । करणं च जगत्सृष्टिसाधनं चेत्यर्थः । इत्यादिश्रुतेर्न ब्रह्मोपादानमित्यर्थः । तर्हि ब्रह्मणो जगदुपादानत्वप्रतिपादकश्रुतिसूत्रभाष्यादिविरोध इत्यत आह— जगदिति । तुशब्दोऽवधारणे । तादृशमेवेति । जगदुपादानमायाधिष्ठानत्वमेवेत्यर्थः ॥

पूर्वत्रेश्वरस्य जगदुपादानत्वमुक्तम् । 'जीवाश्रितमाया—' इत्यादौ जीवोऽपि व्यवहृतः । इदानीं तयोः स्वरूपं निरूपयितुं प्रश्नमवतारयति— अथेति । 'मायां तु प्रकृतिम्' इति श्रुतौ या भूतप्रकृतित्वेन माया प्रसिद्धा तस्यां चैतन्यप्रतिबिम्ब ईश्वरः । ननु 'मायिनं तु महेश्वरम्' इति वाक्यशेषे मायाया ईश्वराश्रितत्वप्रतिपादनादीश्वरस्य मायाप्रतिबिम्बत्वं न संभवति, उपाधेः प्रतिबि-

**रणे— अनादिरनिर्वाच्या भूतप्रकृतिश्चिन्मात्रसंबन्धिनी माया। तस्यां चित्प्रतिबिम्ब ईश्वरः। तस्या एव परि-**

---

म्बाश्रितत्वादर्शनादिति शङ्कां निराचष्टे— **चिन्मात्रसबन्धिनी-ति**। **चिन्मात्राश्रितेत्यर्थः**। मात्रपदेन बिम्बत्वादेर्व्यवच्छेदः। वाक्यशेषेऽपि महेश्वरपदं चिन्मात्रलक्षकमिति भावः। सांख्याभि-मतप्रकृतेरिव मायायाः सत्यत्वं वारयति— **अनिर्वाच्येति**। माया तावद्ब्रह्मचैतन्यान्न वस्तुतो भिन्ना, ब्रह्मव्यतिरिक्तस्य सर्वस्य मि-थ्यात्वप्रतिपादकश्रुतिविरोधेन वस्तुतस्तस्यास्ततो भेदासंभवात्। नाप्यभिन्ना, चैतन्यजडयोरैक्यायोगात्। नापि चैतन्याद्भिन्नाभिन्ना, एकत्र भिन्नत्वाभिन्नत्वयोर्विरोधेनासंभवात्। एव न तावन्माया सती, अद्वैतश्रुतिविरोधात्। नाप्यसती, भूतप्रकृतित्वानुपपत्तेः। नापि सदसती, सत्त्वासत्त्वयोरेकत्र विरोधात्। एवं न तावन्माया साव-यवा, तस्याः सादित्वप्रसङ्गेन तत्प्रतिबिम्बभूतेश्वरस्यापि सादित्वप्र-सङ्गान्मायायाः सादित्वे तत्प्रकृतित्वेन मायान्तरापेक्षायामनवस्थाप्र-सङ्गाच्च। नापि निरवयवा, प्रकृतित्वाभावप्रसङ्गात्सावयवपदार्थाना-मेव लोके प्रकृतित्वदर्शनात्। नाप्युभयरूपा, सावयवत्वनिरवयवत्व-योरेकत्र विरोधात्। तस्मात्सर्वप्रकारेण निर्वक्तुमशक्यतया माया-निर्वाच्येत्यर्थः। तस्याः परिच्छिन्नानन्तप्रदेशेषु चैतन्यप्रतिबिम्बो जीवः। न साक्षात्तस्यामेव चित्प्रतिबिम्बो जीव इत्येवकारार्थः। प्रदेशानां परिच्छिन्नत्वविशेषणं तत्प्रतिबिम्बरूपजीवानां परिच्छि-न्नत्वलाभार्थम्। तथा च भाष्ये तत्र तत्र जीवानां परिच्छिन्नत्व-

**च्छिन्नानन्तप्रदेशेष्वावरणविक्षेपशक्तिमत्स्वविद्याभिधाने-षु चित्प्रतिबिम्बो जीव इति ॥**

---

निरूपणं संगच्छते । तथा हि— ‘ सर्वत्र प्रसिद्धोपदेशात् ’ इत्य-धिकरणे सौत्रशारीरपदव्याख्यानरूपं भाष्यम्— ‘ शारीर इति शरीरे भव इत्यर्थः । नन्वीश्वरोऽपि शरीरे भवति । सत्यं शरीरे भवति । न तु शरीर एव भवति, ‘ ज्यायान्पृथिव्या ज्यायानन्त-रिक्षात् ’ इति ‘ आकाशवत्सर्वगतश्च नित्यः ’ इति च व्यापित्व श्रवणात् । जीवस्तु शरीर एव भवति, तस्य भोगाधिष्ठानाच्छरी-रादन्यत्र वृत्त्यभावात् ’ इति । तथा द्युभ्वाद्यधिकरणगत भाष्यम्— ‘ न चोपाधिपरिच्छिन्नस्याविभोः प्राणभृतो द्युभ्वाद्यायतनत्व सम्य-क्संभवति ’ इति । प्राणभृतो जीवस्य द्युभ्वादिशब्दितजगदायत-नत्वं मुख्यं न संभवति, अविभुत्वादिति भाष्यार्थः । पटस्यारम्भ-कतन्तव इव मायाया न प्रदेशाः सन्ति, तस्या अनादित्वात् । किं तु मायायां विक्षेपावरणशक्तीनामानन्त्याद्विक्षेपावरणशक्तिमद्भागा एव प्रदेशा विवक्षिता इत्याशयेनाह— **आवरणविक्षेपशक्तिम-त्स्विति** । ब्रह्मचैतन्यावरणानुकूला शक्तिरावरणशक्तिः । आवरण च ‘ ब्रह्म नास्ति, न प्रकाशते ’ इति व्यवहारयोग्यत्वम् । विक्षे-पपदेन तत्तज्जीवासाधारणदुःखादिकं विवक्षितम् । तदनुकूला शक्तिर्विक्षेपशक्तिरित्यर्थः । ननु मायाप्रदेशानां जीवोपाधित्ववर्ण-नमनुपपन्नम् , आनुमानिकाधिकरणभाष्यादावविद्याया जीवोपाधि-त्वव्यवहारविरोधप्रसङ्गात् । अत आह— **अविद्याभिधानेष्विति** ।

तत्त्वविवेके तु— त्रिगुणात्मिकाया मूलप्रकृतेः 'जीवेशावाभासेन करोति, माया चाविद्या च स्वयमेव भवति' इति श्रुतिसिद्धौ द्वौ रूपभेदौ। रजस्तमोनभिभूतशुद्धसत्त्वप्रधाना माया तदभिभूतमलिनसत्त्वा त्वविद्येति मायाविद्याभेदं परिकल्प्य, मायाप्रतिबिम्ब ईश्वरोऽविद्याप्रतिबिम्बो जीव इत्युक्तम् ॥

एकैव मूलप्रकृतिर्विक्षेपप्राधान्येन मायाशब्दितेश्वरोपाधिरावरणप्राधान्येनाविद्याज्ञानशब्दिता जीवोपाधिः।

---

मायाप्रदेशानामेव भाष्यगताविद्यापदाभिलप्यत्वान्न तद्विरोध इति भावः ॥

एकस्यामेव मूलप्रकृतौ प्रदेशप्रदेशिभावेनानिर्वचनीयं भेद कल्पयित्वा जीवेश्वरयोः प्रतिबिम्बरूपत्वमुक्तम्। इदानीं तस्यामेव प्रकारान्तरेण रूपभेदं कल्पयित्वा तदुपपादयति— **तत्त्वविवेके त्विति**। भेदकल्पनावैलक्षण्यद्योतनार्थस्तुशब्दः। **रूपभेदाविति**। स्त इति शेषः। रजस्तमोनाभिभूतत्वमेव शुद्धत्वम्। शुद्धसत्त्वप्रधाना प्रकृतिर्माया। मलिनसत्त्वप्रधाना प्रकृतिरविद्येत्यर्थः। रजस्तमोभिभूतत्वमेव सत्त्वस्य मलिनत्वम् ॥

सत्त्वशुद्ध्यशुद्धिभ्यां मायात्वाविद्यात्वाख्यौ श्रुत्युक्तरूपभेदौ निरूप्य विक्षेपावरणशक्तिभेदेन श्रुत्युक्तरूपभेदावेव निरूपयति—

अत एव तस्या जीवेश्वरसाधारणचिन्मात्रसंबन्धित्वेऽपि जीवस्यैव 'अज्ञोऽस्मि' इत्यज्ञानसंबन्धानुभवो नेश्वरस्येति जीवेश्वरविभागः क्वचिदुपपादितः ॥

संक्षेपशारीरके तु 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति श्रुतिमनुसृत्य— अविद्यायां चित्प्रति-

---

एकैवेति । अत एवेति । जीवस्यावरणशक्तिमदुपाधिमत्त्वादेवेत्यर्थ । तस्या इति । जीवेश्वरोपाधिभूतायाः प्रकृते प्रतिबिम्बरूपजीवेश्वरसाधारणबिम्बचैतन्याश्रितत्वेऽपीत्यर्थ. । नेश्वरस्येति । अत्राप्यत एवेत्यस्यानुषङ्गः । आवरणशक्तेरीश्वरोपाधिकोटावनुप्रवेशादेवेति तदर्थः । तथा च जीवेश्वरौ प्रति प्रकृतेः साधारणत्वादेकस्य सर्वज्ञत्वमपरस्याज्ञत्वमिति यद्वैलक्षण्य श्रुत्यनुभवसिद्धं तत्कथं संभवतीति शङ्काया अनवकाश इति भावः ॥

मतान्तरमाह— संक्षेपेति । श्रुतौ कारणपदमविद्यापरं कार्यपदमन्तःकरणपरमिति मत्वाह— अविद्यायामित्यादिना । ननु 'जीवेशावभासेन करोति, माया चाविद्या च स्वयमेव भवति' इति श्रुतिविरोधः, तस्यां श्रुतौ जीवस्य कारणोपाधिकत्वप्रतीतेरिति चेत्, उच्यते— 'जीवेशावभासेन करोति' इति पूर्वभागेण हि जीवेश्वरयोरुभयोरपि प्रतिबिम्बभावः प्रतीयते । न च विम्बैक्यस्थल उपाधिभेदं विना प्रतिबिम्बभेदः संभवति, सूर्यादिप्रतिबिम्बस्थल उपाधिभेदं विना प्रतिबिम्बभेदादर्शनात् । तथा चोदाहृत

बिम्ब ईश्वरः। अन्तःकरणे चित्प्रतिबिम्बो जीवः। न चान्तःकरणरूपेण द्रव्येण घटेनाकाशस्येव चैतन्यस्याव च्छेदसंभवात्तदवच्छिन्नमेव चैतन्यं जीवोऽस्त्विति वा च्यम्। इह परत्र च जीवभावेनावच्छेद्यचैतन्यप्रदेशस्य

---

श्रुतौ प्रतिबिम्बरूपयोर्जीवेशयोर्यथाक्रमं मायाविद्यापदाभ्यामुपाधी समर्प्येते। मायापदं चात्र मायाकार्यान्तःकरणपरम्। न चैवं मूलप्रकृतिं प्रकृत्य प्रवृत्तायाम 'जीवेशौ' इति श्रुतौ 'माया चाविद्या च स्वयमेव भवति' इति वाक्येन मायाविद्ययोरुभयोरपि मूलप्रकृत्यभेदोपपादनविरोध इति वाच्यम्। मूलप्रकृत्यविद्ययोरिव मायाशब्दितान्तःकरणमूलप्रकृत्योर्मुख्याभेदाभावेऽपि प्रकृतिविकारभावप्रयुक्ताभेदसत्त्वेन तावता 'माया चाविद्या च स्वयमेव भवति' इति वाक्यशेषोपपत्तिरिति भावः। नन्वविद्यावच्छिन्नचैतन्यमेवेश्वरोऽस्तु, तथान्तःकरणावच्छिन्नचैतन्यमेव जीवोऽस्तु, अविद्यान्तःकरणाधिष्ठानचैतन्ययोस्तदवच्छिन्नत्वस्य क्लृप्तत्वात्तदतिरिक्तप्रतिबिम्बकल्पनायां गौरवाच्चेत्याशयेन शङ्कते— न चेति। न तु प्रतिबिम्बचैतन्यमित्येवकारार्थः। जीवग्रहणमीश्वरस्याप्युपलक्षणम्। जीवेश्वरयोः प्रतिबिम्बतायाः श्रुतिसिद्धत्वान्न कल्पनागौरवदोषोऽस्तीत्यभिप्रेत्य जीवस्यावच्छिन्नत्वपक्षे दोषमाह— इहेति। अस्मिँल्लोके ब्राह्मणादिशरीरगतान्तःकरणावच्छिन्नचैतन्यप्रदेशस्य कर्मकर्तृत्वाल्लोकान्तरे देवादिशरीरगतान्तःकरणावच्छिन्नचैतन्यप्रदेशस्य चाकर्तुर्भोक्तृत्वात्कृतहानादिप्रसङ्गः।

भेदेन कृतहानाकृताभ्यागमप्रसङ्गात् । प्रतिबिम्बस्तूपाधेर्गतागतयोरवच्छेद्यवन्न भिद्यत इति प्रतिबिम्बपक्षे नायं दोष इत्युक्तम् ॥

एवमुक्तेष्वेतेषु जीवेश्वरयोः प्रतिबिम्बत्वविशेषपक्षेषु यद्बिम्बस्थानीयं ब्रह्म तन्मुक्तप्राप्यं शुद्धचैतन्यम् ॥

---

येन कर्म कृतं न तस्य कर्मफलभोग., येन कर्म न कृतं तस्याकृतकर्मफलाभ्यागम इत्यर्थः । न च ब्राह्मणादिशरीरगतस्यैवान्तःकरणस्य लोकान्तरे गमनाभ्युपगमात्तदवच्छिन्नचैतन्यप्रदेशस्यैव तत्रापि गमनमस्त्विति वाच्यम् । घटस्य देशान्तरगमनेऽपि तदवच्छिन्नाकाशप्रदेशस्य गमनादर्शनादिति भावः । प्रतिबिम्बस्यावच्छेद्यचैतन्यापेक्षया वैलक्षण्यद्योतनार्थस्तुशब्दः । **गतागतयोरिति** । गमनागमनयोः सतोरप्यवच्छेद्यप्रदेशवन्न भिद्यत इत्यर्थः । सूर्यादिप्रतिबिम्बवति जलपूर्णघटादौ देशान्तरं नीयमानेऽपि प्रतिबिम्बभेदादर्शनादिति भावः ॥

ननु चन्द्रादिप्रतिबिम्बवता जलपात्राणां मध्य एकस्य नाशे तद्गततया प्रतीतस्य प्रतिबिम्बस्य बिम्बेनैकीभावः प्रत्यक्षेणानुभूयते न तु प्रतिबिम्बान्तरेण । एवं प्रतिबिम्बरूपजीवस्यापि विदेहकैवल्यसमये बिम्बभूतशुद्धब्रह्मभाव एव स्यान्न तु प्रतिबिम्बेश्वरभावापत्तिः, दृष्टविरोधादित्याशङ्कामिष्टापत्त्या परिहरति—**एवमुक्तेष्विति** । **बिम्बस्थानीयमिति** । लोकप्रसिद्धचन्द्रादिरूपबिम्बस्थानीयमि-

चित्रदीपे 'जीव ईशो विशुद्धा चित्' इति चित्रैविध्यप्रक्रियां विहाय, यथा घटावच्छिन्न आकाशो घटाकाशः, तदाश्रिते जले प्रतिबिम्बितः साभ्रनक्षत्रो जलाकाशः, अनवच्छिन्नो महाकाशः, महाकाशमध्यवर्तिनि मेघमण्डले वृष्टिलक्षणकार्यानुमेयेषु जलरूपतदवयवेषु

---

त्यर्थ । ननु बिम्बत्वविशिष्टचैतन्यं कथं शुद्धमिति चेत्, न । शुद्धपदेन सर्वज्ञत्वसर्वकर्तृत्वादिधर्मराहित्यस्य विवक्षितत्वादिति ॥

**चित्रदीप इति** । चित्रदीपे चित्त्रैविध्यप्रक्रिया विहाय चैतन्यस्य चातुर्विध्यं परिकल्प्य जीवेश्वरविभागो दर्शित इति संबन्धः । तथा च चित्रदीपवचनम्— 'कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा । घटाकाशमहाकाशौ जलाकाशाभ्रखे यथा ॥' इति । एतच्छ्लोकोपात्तसिद्धान्तभागं संगृह्णाति— **यथेत्यादिना** । **तदाश्रित इति** । घटस्थाकाशाश्रित इत्यर्थः । अभ्रनक्षत्रसाहित्यविशेषणमाकाशस्य जले प्रतिबिम्बाभावशङ्कानिरासार्थम् । इत्थं च तन्निरासप्रकारो विवक्षितः—यदा जलेऽभ्रनक्षत्राणां प्रतिबिम्बोऽनुभूयते तदा तैः सहाकाशप्रतिबिम्बोऽप्यनुभूयत एवेति नाकाशप्रतिबिम्बाभावशङ्कावकाश इति । **अनवच्छिन्न इति** । घटानवच्छिन्न इत्यर्थः । मेघमण्डले ये जलरूपास्तदवयवास्तेषु प्रतिबिम्बित इति संबन्धः । तच्छब्दो मेघमण्डलपरः । मेघमण्डले जलानि सन्ति चेत्कुतो नोपलभ्यन्त इत्याशङ्का न कार्या, तेषां तुषारव-

तुषाराकारेषु प्रतिबिम्बितो मेघाकाश इति वस्तुत एक-स्याप्याकाशस्य चातुर्विध्यम्, तथा स्थूलसूक्ष्मदेहद्वय-स्याधिष्ठानतया वर्तमानं तदवच्छिन्नं चैतन्यं कूटवन्नि-र्विकारत्वेन स्थितं कूटस्थम्, तत्र कल्पितेऽन्तःकरणे

---

त्सूक्ष्मरूपत्वादित्याशयेनाह— तुषारेति । तत्र जलसत्त्वे मान-माह— वृष्टिलक्षणेति । श्लोकोपात्तदार्ष्टान्तिकभाग संगृह्णाति— तथेति । सूक्ष्मेति । घ्राणरसनचक्षुःश्रोत्रत्वगाख्यानि पञ्च ज्ञाने-न्द्रियाणि, वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणि, प्राणापानादयः पञ्च वायवः, मनो बुद्धिश्चेत्यन्तःकरणं द्वि-विधम्, आहत्य सप्तदशक लिङ्गशरीर दार्ष्टान्तिके घटस्थानीय सूक्ष्मदेहशब्दार्थः । देहद्वयावच्छिन्नं चैतन्य घटाकाशस्थानीयं कूटस्थशब्दार्थः । चैतन्यस्य देहद्वयावच्छिन्नत्वे हेतुरधिष्ठानतया वर्तमानत्वम् । काष्ठविशेषलग्नाय.पिण्डविशेष. कूटशब्दार्थः । तद्वदचलतया तिष्ठतीति कूटस्थम् । तत्र कूटस्थे कल्पित घट-गतजलस्थानीयं यदन्तःकरणं तस्मिन्प्रतिबिम्बितमित्यर्थ । कूटस्थचैतन्यातिरिक्तचिदाभासकल्पनाया प्रयोजनमाह— संसा-रेति । कूटस्थचैतन्यस्य न ससाराश्रयत्वम्, तस्य जन्ममरणादि-लक्षणसंसाराश्रयत्वे कूटस्थत्वव्याघातादिति भावः । महाकाश-स्थानीयब्रह्माश्रिते मेघमण्डलस्थानीये मायाख्यतमसि स्थिता या धीवासनास्तासु प्रतिबिम्बितमित्यर्थः । जाग्रत्स्वप्नावस्थाद्वयगतानि स्थूलान्तःकरणानि धियः । तासा सुषुप्त्यवस्थागताः सूक्ष्मावस्था

प्रतिबिम्बितं चैतन्यं संसारयोगी जीवः, अनवच्छिन्नं चैतन्यं ब्रह्म, तदाश्रिते मायातमसि स्थितासु सर्वप्राणिनां धीवासनासु प्रतिबिम्बितं चैतन्यमीश्वर इति चैतन्यस्य चातुर्विध्यं परिकल्प्यान्तःकरणधीवासनोपरक्ताज्ञानोपाधिभेदेन जीवेश्वरविभागो दर्शितः। अयं चापरस्तदभिहितो विशेषः— चतुर्विधेष्वेषु चैतन्येषु जीवः 'अहम्' इति प्रकाशमानः कूटस्थेऽविद्यातिरोहितास-

---

वासना विवक्षिताः। अन्तःकरणेति । अन्तःकरणं च धीवासनोपरक्ताज्ञानं च ते एवोपाधी, तयोर्भेदेनेत्यर्थः । धीवासनानामानन्त्यात्तासु प्रतिबिम्बचैतन्यरूपेश्वरस्य नानात्वशङ्काव्यावृत्त्यर्थं वासनोपरक्ताज्ञानोपाधिकत्वमुक्तम् । पूर्वमतेषु बिम्बप्रतिबिम्बयोर्भेदमात्रं कल्पितम्, स्वतस्तयोरभेद एवेतीममर्थं सिद्धं कृत्वास्मिन्मते ततो विशेषमाह— अयं चेति । अस्मिन्मते पूर्वं चिच्चातुर्विध्यलक्षण एको विशेष उक्तः । तदपेक्षयापरोऽन्यः प्रतिबिम्बमिथ्यात्वरूपो विशेषः। तदभिहितः, तत्र चित्रदीपेऽभिहित इत्यर्थः । अपरं विशेषमेव दर्शयति— चतुर्विधेष्विति। अहमिति प्रकाशमानो जीवः शुक्तौ रूप्यवदध्यस्त इति संबन्धः। नन्विदंत्वेन सामान्यरूपेण ज्ञाते शुक्तित्वादिविशेषरूपेणाज्ञाते शुक्त्यादौ रूप्याध्यासो दृष्टः । इह तु तथा सामान्यरूपेण ज्ञातं विशेषरूपेण चाज्ञातं किंचिदधिष्ठानं नोपलभ्यत इत्या-

ज्ञानन्दरूपविशेषांशे शुक्तौ रूप्यवदध्यस्तः । अत एवेदं-त्वरजतत्वयोरिवाधिष्ठानसामान्यांशाध्यस्तविशेषांशरूपयोः स्वयंत्वाहंत्वयोः सहप्रकाशः 'स्वयमहं करोमि' इत्यादौ । अहंत्वं ह्यध्यस्तविशेषांशरूपम्, पुरुषान्तरस्य

---

शङ्कयाह—**कूटस्थ इति** । नन्वविद्यया कूटस्थस्यासङ्गत्वानन्दत्वपूर्णत्वादिविशेषांशस्यावृततया शुक्तित्वादिवदप्रतीतावपि शुक्तेरिदत्वेनेव कूटस्थस्य केनचित्सामान्येन रूपेण प्रकाशो न दृश्यते । किं च 'इदं रजतम्' इत्यत्राधिष्ठानसामान्यांशस्यारोप्यविशेषांशस्य च सह प्रकाशो दृश्यते । प्रकृते त्वहमर्थरूपो विशेष एव 'अहम्' इति प्रकाशते, न तु सामान्यांशः कश्चित् । अतोऽहमर्थस्य रूप्यवदध्यस्तत्वकल्पनं न युक्तमित्याशङ्कयाह— **अत एवेति** । अहमर्थस्य कूटस्थेऽध्यस्तत्वकल्पनादेवेत्यर्थः । **स्वयंत्वाहंत्वयोरिति** । कूटस्थस्य हि स्वयत्वं सामान्यरूपम् । न कूटस्थत्वम्, तस्य शास्त्रैकगम्यत्वात् । स्वयंत्व च कूटस्थस्याहमर्थारोपकाले तेन सह प्रकाशते । तत्पूर्वकालेऽपि स्वयंत्वस्य भानमविरुद्धम्, तस्य नित्यचैतन्यात्मककूटस्थस्वरूपत्वाभ्युपगमात्स्वयंत्वकूटस्थचैतन्ययोः 'राहोः शिर' 'पुरुषस्य चैतन्यम्' इतिवद्भेदकल्पनया धर्मधर्मिभावोपपत्तेश्च । अतः कूटस्थस्य स्वयंत्वेन सामान्यरूपेण सदा प्रकाशमानत्वादहमर्थरूपचिदाभासाध्यासाधिष्ठानत्वमविरुद्धमिति भावः । अहमर्थस्य रूप्यवद्विशेषरूपत्वं दर्शयति— **अहंत्व हीति** । अहमर्थ इत्यर्थः । **अध्यस्तविशेषांशरूपमिति** । शुक्त्या-

पुरुषान्तरे 'अहम्' इति व्यवहाराभावेन व्यावृत्तत्वात्। स्वयंत्वं चान्यत्वप्रतियोग्यधिष्ठानसामान्यांशरूपम्, 'स्वयं देवदत्तो गच्छति' इति पुरुषान्तरेऽपि व्यवहारेणानुवृत्तत्वात्। एवं परस्पराध्यासादेव कूटस्थजीवयो-

---

दावध्यस्तो यो विशेषांशो रूप्यादिस्तद्रूपं तत्सदृशमित्यर्थः। सादृश्यं च व्यावृत्तत्वम्। **व्यावृत्तत्वादिति**। व्यावृत्तत्वावगमादित्यर्थः। तेन न हेतुसाध्ययोरभेदः। व्यावृत्तत्वावगमे हेतुर्व्यवहाराभाव। स्वयत्वस्येदंत्ववत्सामान्यरूपत्व दर्शयति— **स्वयंत्वं चेति**। 'स्वयम्' 'अन्य.' इति लोकव्यवहारे स्वयत्वमन्यत्वप्रतिद्वन्द्वितया प्रसिद्धमिति दर्शयितुमन्यत्वप्रतियोगीति स्वयत्वस्य विशेषणमिति बोध्यम्। **स्वयमिति**। तदुक्तं चित्रदीपे— 'देवदत्तः स्वयं गच्छेत्त्व वीक्षस्व स्वय तथा। अहं स्वयं न शक्नोमीत्येवं लोके प्रयुज्यते॥' इति। ननु 'स्वयम्' 'अहम्' इति प्रकाशमानयो· कूटस्थजीवयो· शुक्तिरजतयोरिव भेदसत्त्वे सर्वेषा कुतो भेदो नोपलभ्यते, तत्राह— **एवमिति**। अहमर्थजीवस्य शुक्तौ रूप्यवत्कूटस्थाध्यस्तत्वे सतीत्यर्थः। **परस्परेति**। तयोरभेदाध्यासादेवाविवेको विवेकाभावः, भेदानुभवाभाव इत्यर्थ·। ननु 'इदं रजतम्' इति भ्रमस्थले 'शुक्तिरियम्' इति विशेषदर्शनेन 'इदम्' 'रजतम्' इति प्रतीतयोः सामान्यविशेषपदार्थयोः शुक्तित्वरजतत्वरूपविरुद्धधर्मवत्त्वनिश्चयात्तयोर्भेद उपेयते। इह तु जीवकूटस्थयोः कथं भेदोऽवगन्तव्यः, तदभावे हि 'स्वयम्' 'अहम्'

रविवेको लौकिकानाम् । विवेकस्तु तयोर्बृहदारण्यके 'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति' इति जीवाभिप्रायेणोपाधिविनाशानुविनाश-प्रतिपादनेन 'अविनाशी वा अरेऽयमात्मा' इति कूट-

---

इति सामान्यविशेषभावेन प्रकाशमानयोस्तयोः सत्यरजतस्थले रजतेदमर्थयोरिव वस्तुत ऐक्यापत्त्याहमर्थरूपजीवस्य स्वयंशब्दार्थ-भूतकूटस्थे कल्पितत्वासिद्धेरित्याशङ्क्य श्रुत्या तयोर्भेदं दर्शयति— **विवेकस्त्विति** । तुशब्द शङ्काव्यावृत्त्यर्थः । विवेको भेदानुभवः । एतेभ्यः सन्निहितेभ्यो देहादिसंघातरूपेण परिणतेभ्य उपाधिभ्यो भूतेभ्य. समुत्थाय साम्येनोत्थाय, उपाधिरूपबुद्ध्याद्युत्पत्त्योत्पत्ति-प्राप्येत्यर्थ । तान्युपाधिभूतानि बुद्ध्यादीनि तत्त्वज्ञानेन यदा विनश्यन्ति तदा तान्यनु विनश्यतीति श्रुत्यौपाधिकस्यात्मनो विना-शित्वं प्रतिपाद्यते । तच्चान्तःकरणप्रतिबिम्बरूपस्योपाध्यायत्तस्य जी-वस्य मिथ्यात्वे सति संभवति । औपाधिकजीवस्य सत्यत्वे तु तस्य विनाशित्वप्रतिपादकं वचनं न संगच्छेत । तथाय प्रज्ञानघन आत्मारे मैत्रेयि, अविनाशी वा अविनाश्येव, न तूपाधिनाशा-न्नश्यतीति कूटस्थचैतन्यस्य श्रुत्या नाशाभावः प्रतिपाद्यते । एतदुक्तं भवति— 'अयमात्मा प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय' इत्यादिश्रुत्या चिदेकरस आत्मैवोपाध्युत्पत्तिमनूत्पद्यते तन्नाशमनु नश्यतीत्युपाध्युत्पत्तिविनाशव्यतिरेकेणोत्पत्तिविनाशौ तस्य न प्रतिपाद्येते, 'अनु विनश्यति' इत्यनुशब्दप्रयोगात् । न च

**स्याभिप्रायेणाविनाशप्रतिपादनेन च स्पष्टः । अहमर्थस्य जीवस्य विनाशित्वे कथमविनाशिब्रह्माभेदः । नेद-**

---

तस्य स्वतो विनाशित्वं सभवति, 'अविनाशी वा अरे अयमात्मा' इति वाक्येन विज्ञानघनात्मनो विनाशाभावप्रतिपादनविरोधात् । अतश्चिदात्मन उत्पत्तिविनाशवता प्रतिबिम्बचैतन्यरूपजीवेन तादात्म्यमादाय विनाशादिवचनमुपपादनीयम् । ततश्च भ्रमस्थलीयरजतेदमर्थयोरिवात्रापि विनाशित्वाविनाशित्वरूपविरुद्धधर्मवत्त्वनिश्चयादेव जीवकूटस्थयोर्भेदः स्पष्टं भासत इति ततः प्राक्कूटस्थचैतन्ये जीवरूपाहमर्थस्याध्याससिद्धिरिति । उदाहृतश्रुत्या प्रतिबिम्बजीवस्य विनाशित्वोपगमे श्रुत्यन्तरविरोधमाशङ्कते—**अहमर्थस्येति** । अभेद इत्यनन्तरम् 'अहं ब्रह्मास्मि' इति वाक्येन प्रतिपाद्यत इति शेषः । विनाश्यविनाशिनोरभेदायोगादिति भावः । परिहरति— **नेदमिति** । 'सोऽयम्' इत्यादिसमानाधिकरणवाक्यस्य यथाभेदो वाक्यार्थो दृश्यते तथा 'यः स्थाणुः स पुरुषः' इत्यादिसमानाधिकरणवाक्यस्य बाधारूपो वाक्यार्थो दृश्यते । 'यः स्थाणुः स पुरुषः' इत्यत्र हि पुरुष आरोपितस्य प्रातिभासिकस्य स्थाणोर्व्यावहारिकपुरुषेण सहाभेदो न वाक्यार्थः, बाधितत्वात् । किंतु स्थाण्वारोपाधिष्ठानभूते पुरुषे वस्तुतः स्थाणुतादात्म्याभावरूपा बाधा वाक्यार्थः । तथा च 'यः स्थाणुः स पुरुषः' इति वाक्येन 'वस्तुतः स्थाणुतादात्म्याभाववानयं पुरुषः' इति बोधो

मभेदे सामानाधिकरण्यम्, किं तु बाधायाम्। यथा 'यः स्थाणुरेष पुमान्' इति पुरुषत्वबोधेन स्थाणुत्व-

---

जायते। तेन च बोधेन पुरुषे स्थाण्वारोपः सविषयो निवर्तते। एवम् 'अहं ब्रह्मास्मि' इति वाक्येन 'अहमर्थभूतजीवतादात्म्य-शून्यं ब्रह्मैवास्मि' इति ज्ञानं जायते। तेन ज्ञानेन 'अहं ज्ञाता कर्ता सुखी दुःखी' इत्याद्यारोपः कर्तृत्वादिधर्मविशिष्टेनाहमर्थेन स्वविषयेण सह निःशेषं निवर्तते। आरोपिताहमर्थनिवृत्तौ च सत्यां जीवस्य यद्वास्तवं रूपं कूटस्थचैतन्यात्मकं तत्पूर्णब्रह्म-रूपेणावतिष्ठत इति न श्रुत्यन्तरविरोध इति भावः। अक्षरा-र्थस्तु— इदं ब्रह्माहंपदयोः समानविभक्तिमत्त्वरूपं सामानाधिकर-ण्यमभेदरूपेऽर्थे नाभ्युपगम्यते येनाभेदासंभवो दोषः स्यादिति। ननु यद्यभेदो न वाक्यार्थः कस्तर्हि स इति शङ्कते— **किं त्विति**। बाधात्र वाक्यार्थो विवक्षित इत्याह— **बाधायामिति**। पुरुषत्वपदेन कल्पितस्थाणुतादात्म्याभाववत्त्वं विवक्षितम्, बा-धाया वाक्यार्थत्वस्वीकारात्। 'अहं ब्रह्मास्मि' इतीत्य-त्रेतिपदानन्तरं वाक्यजन्येनेति शेषः। अत्र वाक्यार्थज्ञान-स्य 'अहं ब्रह्मास्मि' इत्याकारकत्वाभावात्कूटस्थब्रह्मरूपत्वपदे-नापि वस्तुतोऽहमर्थतादात्म्याभाववत्कूटस्थब्रह्मरूपत्वं विवक्षितम्, बाधाया एव वाक्यार्थबोधविषयत्वाभ्युपगमात्। दृष्टान्तदा-र्ष्टान्तिकयोरधिष्ठानस्यारोपितार्थाभाववत्त्वमारोपितात्यन्ताभावस्या-धिष्ठानातिरिक्तत्वमिति मतमाश्रित्यास्माभिरुक्तमिति ध्येयम्।

बुद्धिर्निवर्त्यत एवम् 'अहं ब्रह्मास्मि' इति कूटस्थब्रह्मरूपत्वबोधेनाध्यस्ताहमर्थरूपत्वं निवर्त्यते, 'योऽयं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव। ब्रह्मास्मीति धियाशेषा ह्यहंबुद्धिर्निवर्त्यते ॥' इति नैष्कर्म्यसिद्धिवच-

---

अध्यस्ताहमर्थरूपत्वमिति। अध्यस्तो योऽहमर्थस्तद्रूपत्व तत्तादात्म्यं निवर्त्यत इति बोधफलमुक्तम्। महावाक्यस्य बाधार्थकत्व न स्वकपोलकल्पितम्, किं तु सुरेश्वराचार्यैरुक्तमित्याह—योऽयमिति। 'मन्दान्धकारे यः स्थाणुर्गृहीत एषोऽयं पुमान्' इत्याप्तवाक्यजन्यया पुंधिया 'वस्तुतो नायं स्थाणुः, किं तु पुमान्' इति धिया 'स्थाणुरयम्' इति धीरारोपितस्थाणुतादात्म्येन सह यथा निवर्तते, एवम् 'अह ब्रह्मास्मि' इति वाक्यजन्यया धिया 'अहमर्थभूतजीवतादात्म्यशून्यं ब्रह्मैवास्मि' इत्याकारयाहंबुद्धिः 'अह करोमि भुञ्जे' इत्यादिबुद्धिरशेषारोपिताहमर्थसहिता निवर्त्यते। महावाक्यार्थज्ञानादशेषानर्थनिवृत्तिर्विदुषामनुभवसिद्धेति द्योतनार्थो हिशब्दः। ननु समानाधिकरणवाक्येष्वभेदरूपवाक्यार्थस्य मुख्यतयौत्सर्गिकत्वाद्विवरणादिषु प्रकृतेऽभेदरूपवाक्यार्थस्यैव स्वीकाराच्च भगवत्पादैरपि वाक्यवृत्तौ 'तादात्म्यमात्रं वाक्यार्थस्तयोरेव पदार्थयोः' इति श्लोकेन महावाक्येषु तत्त्वंपदार्थयोस्तादात्म्यशब्दिताभेदस्यैव वाक्यार्थतया स्वीकाराच्च वार्त्तिककारवचनस्य 'बाधाया अपि प्रकृते वाक्यार्थता वक्तुं शक्यते' इति

नात् । यदि तु विवरणाद्युक्तरीत्येदमभेदे सामानाधिकरण्यं तदा जीववाचिनोऽहंशब्दस्य लक्षणया कूटस्थपरत्वमस्तु, तस्याबाध्यस्य ब्रह्माभेदयोग्यत्वात् । यस्तु मेघाकाशकल्पो धीवासनाप्रतिबिम्ब ईश्वर उक्तः सोऽयम्

---

प्रौढिमाश्रित्य प्रवृत्त्युपपत्तेश्च ' अहं ब्रह्मास्मि ' इत्यत्राभेदो वाक्यार्थ इति स्थिते विनाशिजीवस्याविनाशिब्रह्माभेदो न सम्भवतीति चोद्य तदवस्थमेवेत्यस्वरसादाह— **यदि त्विति** ' कूटस्थो ब्रह्म जीवेशावित्येवं चिच्चतुर्विधा ' इति श्लोकसंगृहीताना कूटस्थब्रह्मजीवेश्वराणा चतुर्णां मध्ये ब्रह्मचैतन्य तावत्सत्यज्ञानादिवाक्येषु सुप्रसिद्धमिति तत्र वाक्यं प्रमाणत्वेन नोदाहृतम् । कूटस्थचैतन्ये ' अविनाशी वै ' इति वाक्यं प्रमाणत्वेन दर्शितम् । उपाध्युत्पत्तिविनाशानुविधाय्युत्पत्तिविनाशवचनमन्तःकरणगतचैतन्यप्रतिबिम्बरूपे जीवे प्रमाणमुक्तम् । परिशेषात्पूर्वोक्तेश्वरे प्रमाणं वक्तव्यम । तदाह— **यस्त्विति** । तुशब्दोऽवधारणे । य ईश्वर उक्तः सोऽयं श्रुत्युक्तानन्दमय एव नान्य इत्यर्थ । सुषुप्तं स्थानमस्येति सुषुप्तस्थान । जागरणे हि विज्ञानशब्दितेऽन्तःकरणे तादात्म्याध्यासाद्विज्ञानमयत्वमनोमयत्वकर्तृत्वादीनि रूपाणि सन्ति । तथा देहे ' स्थूलोऽहम् ' इत्याद्यभेदाध्यासात्स्थूलत्वकृशत्वब्राह्मणत्वादीनि रूपाणि सन्ति । तथा चक्षुरादिषु ' काणोऽहम ' ' मूकोऽहम ' इत्यादिरूपादध्यासात्काणत्वमूकत्वादीनि रूपाणि सन्ति । एवमाकाशादिषु पदार्थेष्वध्याससिद्धानि ' आकाशमयः ' ' वायुमयः '

**'सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्' इति माण्डूक्यश्रुतिसिद्धसौषुप्तानन्दमयः, तत्रैव तदनन्तरम् 'एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्' इति श्रुतेः**

---

इत्यादिश्रुतिसंगृहीतान्यनन्तरूपाणि जीवस्य सन्ति । सुषुप्ते तु बुद्ध्याद्युपाधिलयेन सर्वप्रकारभ्रान्तिलयाद्भ्रान्तिसिद्धानि सर्वाण्यपि रूपाणि लीयन्त इत्यभिप्रेत्य 'एकीभूतः' इत्युक्तम् । तदुक्तम्— 'विज्ञानमयमुख्यैर्यो रूपैर्युक्तः पुराधुना । स लयेनैकतां प्राप्तो बहुतण्डुलपिष्टवत् ॥' इति । पुरा सुप्तात्पूर्वकाले । लयेन रूपाणां लयेनेत्यर्थः । प्रज्ञानं चैतन्यम् । तच्च जाग्रदादौ वृत्तिभेदेन भेदरूपं शैथिल्यं प्राप्य स्थितम् । सुषुप्ते वृत्तीनां विलयात्पुनरेकत्वं प्राप्तमित्यभिप्रेत्य प्रज्ञानघनत्वमुक्तम् । आनन्दोऽत्र बिम्बभूतो ब्रह्मानन्दो विवक्षितः । तस्य प्रतिबिम्बभूतो जीव आनन्दमयः । स च स्वरूपभूतमानन्दं सुषुप्तिकालेऽविद्यावृत्तिभिर्भुङ्क्त इत्यानन्दभुगिति श्रुत्यर्थः । ननु जाग्रत्स्वप्नयोः स्थूलावस्थान्तःकरणप्रतिबिम्बरूपो जीवो विज्ञानमयः, स्थूलान्तःकरणस्य विज्ञानशब्दवाच्यत्वात् । स एव विज्ञानमयो जीवः स्वापकाले सूक्ष्मरूपेण विलीनावस्थान्तःकरणोपाधिकः सन्नानन्दमय इत्युच्यते । तथा चानन्दमयस्य जीवत्वादीश्वरत्वमसिद्धमित्याशङ्क्य सौषुप्तानन्दमयस्यैवेश्वरत्वं वाक्यशेषो दर्शयतीत्याह— **तत्रैवेति** । माण्डूक्यश्रुतावेवेत्यर्थः । सर्वेश्वरत्वं सर्वजगदुत्पत्तिकर्तृत्वम् । योनिरुपादानम् । आनन्दमयस्य सर्वोपादानत्वे

सर्ववस्तुविषयमकलप्राणिधीवासनोपाधिकस्य तस्य स-

हेतुमाह— **प्रभवेति** । हि यस्माद्भूताना प्रभवाप्ययौ जन्मलयौ सौषुप्तानन्दमयाद्भवतस्तस्मादेष सर्वस्य योनिरित्यर्थः । आनन्द-मयस्य श्रुत्युक्तसर्वज्ञत्वे युक्तिमप्याह— **सर्ववास्त्विति** । एकैका धी किंचित्किंचिद्विषयीकरोतीति सर्वाभिर्धीभिर्मिलित्वा सर्वं ज-गद्विषयीक्रियते । एवं च सर्वबुद्धीना सर्वविषयकत्वे सिद्धे सति सर्वबुद्धिसूक्ष्मावस्थारूपाणा सर्वबुद्धिवासनानामपि सर्वविषयकत्व सिध्यति । तथा च सर्वप्राणिबुद्धिवासनोपाधिकस्यानन्दमयस्य सर्वज्ञत्वसिद्धिरित्यर्थः । ननु धीवासनोपरक्ताज्ञानोपाधिक ईश्वर इति यदुक्तं तत्र किं प्रतिबिम्बेश्वरस्याज्ञानमेवोपाधि , किं वा वा-सनोपरक्ताज्ञानम्, अथ वा सर्वा धीवासनाः, उत प्रत्येकं वास-ना । नाद्यः, धीवासनासु प्रतिबिम्बितं चैतन्यमीश्वर इत्युक्तिवि-रोधादज्ञानमात्रस्येश्वरोपाधित्वे धीवासनानुसरणवैफल्याच्च । न चाज्ञानोपाधिकस्यैवेश्वरस्य सर्वज्ञत्वलाभार्थं सर्वविषयकधीवासनानु-सरणमिति वाच्यम् । अज्ञानगतसत्त्वांशपरिणामरूपाभिः सर्ववि-षयकवृत्तिभिरेव सर्वज्ञत्वोपपादनसंभवेन तदर्थं धीवासनानपेक्ष-णात् । अत एव न द्वितीयः । अज्ञानमात्रस्य तदुपाधित्वसंभवा-द्युगपत्सर्वप्राणिनां सुषुप्त्यसंभवेन सर्वबुद्धिवासनानां यौगपद्या-संभवाच्च न तासामज्ञानविशेषणतयेश्वरोपाधित्वसंभवः । तासां यौ-गपद्यासभवेन न तृतीयोऽपि कल्पः संगच्छते, सर्वासु धीवासनासु व्यासक्ततयैकस्येश्वररूपप्रतिबिम्बस्यासंभवाच्च, लोके व्यासज्ज्यवृ-

र्वज्ञत्वस्य तत एव सर्वकर्तृत्वादेरभ्युपपत्तेश्च । न चास्म-द्बुद्धिवासनोपहितस्य कस्यचित्सार्वज्ञ्यं नानुभूयत इति वाच्यम्; वासनानां परोक्षत्वेन तदुपहितस्यापि परोक्षत्वादिति ॥

ब्रह्मानन्दे तु सुषुप्तिसंयोगान्माण्डूक्योक्त आनन्दम-

---

त्तिप्रतिबिम्बादर्शनात् । तस्माच्चतुर्थः कल्प परिशिष्यते । तत्रानुभवविरोधमाशङ्कते— **न चास्मदिति** । अस्माकं प्राणिनामेकैक-बुद्धिवासनोपहितस्यानन्दमयस्य कस्यापि स्वापकाले 'अहं सर्वज्ञः' इत्याद्यनुभवो नास्तीत्यर्थः । **वासनानामिति** । जाग्रदादौ स्थूलावस्थान्तःकरणानामिव सुषुप्तौ वासनात्मकान्तःकरणानां साक्षिप्रत्यक्षयोग्यत्वाभावेन तदुपाधिकानन्दमयानामपि नाहमनुभवयोग्यत्वमित्यर्थः ॥

माण्डूक्यश्रुत्युक्तानन्दमयस्य सकलधीवासनोपाधिकस्योक्तरीत्यैकस्यासंभवात्प्रत्येकमेव धीवासनोपाधिक आनन्दमयो वाच्यः । स च जीव एवेत्याह— **ब्रह्मानन्दे त्विति** । चित्रदीपे **श्रीविद्यारण्यगुरुभिरी**श्वरत्वेनोक्तानन्दमयस्य तैरेव **ब्रह्मानन्दाख्यग्रन्थे** जीवत्वोक्तिरूपविशेषार्थकस्तुशब्दः । सुषुप्तिसंयोगादित्युपलक्षणम् । वासनोपाधिकस्येश्वरत्वे जाग्रदादावीश्वराभावप्रसङ्गादेकैकवासनोपाधिकस्य नानात्वेनेश्वरनानात्वप्रसङ्गात्सकलवासनोपाधिकस्य कस्यचिदसंभवाच्चेत्यपि द्रष्टव्यम् । तत्रोक्तप्रकारं दर्श-

यो जीव इत्युक्तम् । तथा हि— जाग्रदादिषु भोगप्रदस्य कर्मणः क्षये निद्रारूपेण विलीनमन्तःकरणं पुनर्भोगप्रदकर्मवशात्प्रबोधे घनीभवति । तदुपाधिको जीवो विज्ञानमय इत्युच्यते । स एव पूर्वं सुषुप्तिसमये विलीनावस्थोपाधिकः सन्नानन्दमय इत्युच्यते । स एव माण्डूक्ये 'सुषुप्तस्थानः' इत्यादिना दर्शित इति । एवं सति तस्य सर्वेश्वरत्वादिवचनं कथं संगच्छताम् । इत्थम्— सन्त्यधिदैवतमध्यात्मं च परमात्मनः सवि-

---

यति— तथा हीति । जाग्रदादिषु भोगप्रदं यत्कर्म तस्य क्षये सतीत्यर्थः । आदिपदं स्वप्नपरम् । बहुवचनं तु जाग्रत्स्वप्नव्यक्तिभेदापेक्षम् । **निद्रारूपेणेति** । सुषुप्तिरूपेणेत्यर्थः । तदुक्तं पञ्चीकरणे— 'बुद्धेः कारणात्मनावस्थानं सुषुप्तिः' इति । आनन्दमयस्य जीवत्वे तस्येश्वरत्वप्रतिपादकवाक्यशेषविरोधं शङ्कते— **एवं सतीति** । सुषुप्तजीवरूपानन्दमयस्य वस्तुत ईश्वरत्वाभावेऽपीश्वराभेदविवक्षया तस्येश्वरत्ववचनं सगच्छत इति परिहरति— **इत्थमित्यादिना** । माण्डूक्यश्रुतौ जीवेश्वरयोरभेदाविवक्षां दर्शयितु पीठिकां करोति— **सन्तीति** । परमात्मनोऽधिदैवतं सविशेषाणि त्रीणि रूपाणि सन्ति । तथा परमात्मनोऽध्यात्मं च सविशेषाणि त्रीणि रूपाणि सन्तीति संबन्धः । परमात्मन इत्यस्य निर्विशेषचैतन्यस्येत्यर्थः । अधिदैवतमित्यस्य देवतात्म-

शेषाणि त्रीणि त्रीणि रूपाणि । तत्राधिदैवतं त्रीणि शुद्धं चैतन्यं चेति चत्वारि रूपाणि चित्रपटदृष्टान्तेन चित्रदीपे समर्थितानि— यथा स्वतः शुभ्रः पटो धौतः, अन्नलिप्तो घट्टितः, मष्याकारयुक्तो लाञ्छितः, वर्णपूरितो रञ्जित इत्यवस्थाचतुष्टयमेकस्यैव चित्रपटस्य; तथा परमात्मा मायातत्कार्योपाधिरहितः शुद्धः, मायोपहित

---

कानीत्यर्थः । अध्यात्ममित्यस्य च जीवात्मकानीत्यर्थः । अधिदैवतमध्यात्ममिति च पदद्वयमव्ययम् । उक्तं प्रपञ्चयति— **तत्रेति** । अध्यात्माधिदैवतरूपाणां मध्य इत्यर्थः । जीवस्य त्रीणि सविशेषरूपाणि तुरीयपादात्मकं निर्विशेषरूपं च माण्डूक्यश्रुतौ कण्ठतो दर्शितानि । ईश्वरस्य तु निर्विशेषसविशेषरूपाणि तच्छ्रुत्यभिप्रेतान्यपि श्रुत्या कण्ठतो नोक्तानि । तानि तु श्रुतितात्पर्याभिज्ञैः श्रीविद्यारण्यगुरुभिश्चित्रदीपे सदृष्टान्तं निरूपितानीत्याह— **चित्रपटेति** । तत्रायं दृष्टान्तसंग्राहकः श्लोकः—'स्वतः शुभ्रोऽत्र धौतः स्याद्घट्टितोऽन्नविलेपनात् । मष्याकारैर्लाञ्छितः स्याद्रञ्जितो वर्णपूरणात् ॥' इति । एतच्छ्लोकसंगृहीतं दृष्टान्तं विवृणोति— **यथेति** । 'स्वतश्चिदन्तर्यामी तु मायावी सूक्ष्मसृष्टितः । सूत्रात्मा स्थूलसृष्ट्यैष विराडित्युच्यते परः ॥' इति श्लोकसंगृहीतं दार्ष्टान्तिक दर्शयति— **तथेति** । श्लोके परः स्वतश्चिदिति संबन्धः । अमुमंशं विवृणोति— **परमात्मेति** । श्लोके तुशब्दोऽवधारणे । तथा च पर एव मायावी सन्नन्तर्यामीत्युच्यत इति

ईश्वरः, अपञ्चीकृतभूतकार्यसमष्टिसूक्ष्मशरीरोपहितो हिरण्यगर्भः, पञ्चीकृतभूतकार्यसमष्टिस्थूलशरीरोपहितो वि-

---

संबन्धः । अमुमंशमाह— मायोपहित ईश्वर इति । श्लोके पर एव सूक्ष्मसृष्टितः सूत्रात्मेति संबन्धः । अमुमंशं व्याचष्टे— अपञ्चीकृतेति । अपञ्चीकृतानां भूतानां यत्कार्यं व्यापकं सूक्ष्मशरीरं तदुपहित इत्यर्थः । न च सूत्रात्मनो हिरण्यगर्भशब्दितस्य श्रुतिस्मृत्योर्जीवत्वप्रसिद्धेः कथं तस्येश्वररूपत्वमिति वाच्यम् । जीवरूपहिरण्यगर्भस्य समष्टिसूक्ष्मशरीराभिमानविशिष्टस्य सत्यलोकस्वामिन ईश्वरान्यत्वाभ्युपगमात्, ईश्वरस्य तु समष्टिसूक्ष्मशरीराभिमानाभावेऽपि समष्टिसूक्ष्मशरीरनियन्तृतया तदुपाधिकस्य समष्टिसूक्ष्मोपाध्युपहितत्वगुणयोगेन हिरण्यगर्भसूत्रात्मपदाभ्यां निर्देशस्येह विवक्षितत्वात् । तथा च गौणमीश्वरस्य हिरण्यगर्भत्वमिति भावः । अत एव चित्रदीपे ईश्वररूपहिरण्यगर्भापेक्षया सत्यलोकाधिपतेर्ब्रह्मणस्तत्तद्वाद्यभिमतेश्वरपरिगणनावसरे पृथगुपादानं कृतमिति मन्तव्यम् । श्लोके एष एव परः स्थूलसृष्ट्या विराडित्युच्यत इति संबन्धः । अमुमंशं व्याकुर्वन्संगृह्णाति— पञ्चीकृतेति । अयमीश्वररूपो विराट्पुरुषः पुरुषसूक्तवैश्वानरविद्यावाक्यादिरूपश्रुतिसिद्धो द्रष्टव्यः । सत्यलोकाधिपतेर्हिरण्यगर्भस्य पुत्ररूपो विराट्पुरुषः समष्टिस्थूलाभिमानी जीवो बृहदारण्यकश्रुतिसिद्धोऽन्य एवेत्यपि द्रष्टव्यम् । इत्यवस्थेति । उक्तप्रकारेण वस्तुत एकस्यैव रूपचतुष्टयं द्रष्टव्यमित्यर्थः । एवं प्रकृतोप-

राट्पुरुष इत्यत्रस्थाचतुष्टयमेकस्यैव परमात्मनः। अस्मिं- श्चित्रपटस्थानीये परमात्मनि चित्रस्थानीयः स्थावरज- ङ्गमात्मको निखिलः प्रपञ्चः। यथा चित्रार्पितमनुष्या- णां चित्राधारवस्त्रसदृशा वस्त्राभासा लिख्यन्ते तथा परमात्माध्यस्तदेहिनामधिष्ठानचैतन्यसदृशाश्चिदाभासाः कल्प्यन्ते। ते च जीवनामानः संसरन्तीति। अध्यात्मं तु विश्वतैजसप्राज्ञभेदेन त्रीणि रूपाणि। तत्र सुषुप्तौ

---

युक्तं रूपचतुष्टयं दर्शयित्वा प्रसङ्गादाह— अस्मिन्निति। ननु कृत्स्नस्य जगतश्चित्रस्थानीयत्वे तद्वदेव सर्वमचेतनं स्यात्, तथा च चेतनाचेतनविभागो न स्यादिति शङ्कां दृष्टान्तेन परिहरति— **यथेति। वस्त्राभासा इति।** वर्णविशेषात्मकवस्त्राणां चित्राधारेण वस्त्रेणाकृतिसाम्येऽपि शीतादिनिवर्तकत्वाभावादाभासत्वम्। **दे- हिनामिति।** स्थूलदेहवतामहंकाराणामित्यर्थः। अन्तःकरणात्म- काहंकारेषु चैतन्यस्य प्रतिबिम्बकल्पनस्य प्रयोजनमाह— **ते चेति।** तथा च चिदाभासयुक्ताः कार्यकरणसंघाताश्चेतनाः, अन्ये गिरिसमुद्रादयोऽचेतना इति विभागसिद्धिरिति भावः। एवमीश्वरस्य रूपाणि दर्शितानि। जीवस्य श्रुत्युक्तानि सविशेष- निर्विशेषरूपाणि दर्शयति— **अध्यात्मं त्विति।** तुशब्द ईश्वरस्य सविशेषरूपाण्यपेक्ष्य जीवस्य सविशेषरूपाणां वैलक्षण्यसूचनार्थः। तदेव वैलक्षण्यं दर्शयति— **विश्वेति। रूपाणीति।** सविशेषा-

**विलीनेऽन्तःकरणेऽज्ञानमात्रसाक्षी प्राज्ञः, योऽयमिहानन्दमय उक्तः। स्वप्ने व्यष्टिसूक्ष्मशरीराभिमानी तैजसः।**

णीति शेष । **तत्रेति** । रूपत्रयमध्य इत्यर्थः । **विलीन इति** । अन्त करणे विलीने सति सूक्ष्मरूपेण विलीनान्त करणोपाधिकः संपद्यत इति भाव । स्थूलान्त करणादिसाक्षित्वव्यवच्छेदार्थं मात्राग्रहणम् । ननु पूर्वं सौषुप्तजीव आनन्दमय इत्युक्तम् । इदानीं कथं स एव प्राज्ञ इत्युच्यते । तत्राह—**योऽयमिति** । **इहेति** । माण्डूक्यश्रुताविन्यर्थ । तत्रैव 'आनन्दभुक्' इत्यनन्तरम् 'चेतोमुखः प्राज्ञस्तृतीयः पादः' इति वाक्यशेषदर्शनादिति भाव. । चेतांसि चित्प्रतिबिम्बोपेतान्यविद्यावृत्तिरूपाणि मुखानि स्वापकालीनानन्दानुभवसाधनानि यस्य स चेतोमुखः । ननु सौषुप्तजीवस्यानन्दभुक्त्वं चेतोमुखत्वं च श्रुतमपि कथमुपपन्नमिति चेत्, उच्यते— सुषुप्तादुत्थितस्य हि 'सुखमहमस्वाप्सम' इति स्वापकालीनविशिष्टसुखस्मरणं दृश्यते । तच्च तदा सुखानुभवमन्तरेण न संभवति, अननुभूतस्य सुखस्य स्मरणायोगात् । न च सुषुप्तावात्मस्वरूपसुखस्यान्तःकरणवृत्तिभिरेवानुभवः संभवतीति वाच्यम् । तदा विलीनस्यान्तःकरणस्य वृत्त्युत्पादनयोग्यत्वाभावात् । न च मुक्तिकाल इव स्वापकालेऽपि स्वरूपचैतन्येनैव सुखानुभवसंभवात्किमविद्यावृत्तिप्रतिबिम्बरूपचेतःकल्पनयेति वाच्यम् । जाग्रत्स्वप्नयोश्चैतन्यप्रतिबिम्बोपेतवृत्तिभिरानन्दानुभवदर्शनेन सुषुप्तावपि तथा संभवे परित्यागायोगात्, मुक्तिकाले चोपाधिमात्रविलया-

**जागरे व्यष्टिस्थूलशरीराभिमानी विश्वः । तत्र माण्डूक्यश्रुतिरहमनुभवे प्रकाशमानस्यात्मनो विश्वतैजसप्राज्ञतुरीयावस्थाभेदरूपं पादचतुष्टयम् 'सोऽयमात्मा चतुष्पात्' इत्युपक्षिप्य पूर्वपूर्वपादप्रविलापनेन निष्प्रप-**

---

भ्युपगमाद्दृश्यसंभव इति वैषम्यसत्त्वात्, सौषुप्तसुखानुभवस्य केवलनित्यसाक्षिरूपत्वेऽनुभवनाशरूपसंस्काराभावप्रसङ्गेन 'सुखमहमस्वाप्सम्' इत्यनुसंधानाभावापत्तेश्च । तस्माद्यथोक्ता श्रुतिरुपपन्नैव । **व्यष्टीति** । परिच्छिन्नेत्यर्थः । एते पादाः साक्षाच्छ्रुत्युक्ता इत्याह— **तत्रेति** । उक्तरीत्या पादकल्पनोपपत्तौ सत्यामित्यर्थः । श्रुतिः पादचतुष्टयमुपक्रम्य विश्वादिपादान्न्यरूरुपदिति संबन्धः । पद्यते गम्यतेऽवगम्यते ब्रह्मात्मैक्यमेभिरिति पादा विश्वादयः । इमां व्युत्पत्तिमभिप्रेत्य श्रौतपादकल्पनायाः प्रयोजनमाह— **पूर्वपूर्वेति** । अयमर्थः— 'सोऽयमात्मा चतुष्पात्' इति वाक्येन जीवस्य पादचतुष्टयवत्त्वमुपक्रम्य 'जागरितस्थानो वैश्वानरः प्रथमः पादः' इत्युक्तम् । अत्र जीवपादानामेव वक्तुमुपक्रान्तत्वाद्विश्वः प्रथमः पाद इति वक्तव्ये वैश्वानरशब्दितस्य विराट्पुरुषरूपेश्वरस्य प्रथमपादत्वोक्तिर्विश्वे वैश्वानरस्यान्तर्भावं सूचयति । न च हिरण्यगर्भेश्वरौ विहाय वैश्वानरस्यैव विश्वान्तर्भावे किं नियामकं श्रुत्यभिमतमिति वाच्यम् । तयोः स्थूलोपाधिकत्वरूपसाम्यस्येश्वरहिरण्यगर्भव्यावृत्तस्य नियामकतया विवक्षितत्वात् ।

तथा द्वितीयपादप्रतिपादकवाक्ये 'स्वप्नस्थानस्तैजसो द्वितीयः पादः' इत्युक्तम्। अत्र सूक्ष्मोपाधिकत्वसाम्येन हिरण्यगर्भस्य तैजसेऽन्तर्भावो विवक्षितः, 'वैश्वानरः प्रथमः पादः' इत्युपक्रमानुसारात्। तथा तृतीयपादप्रतिपादकम् 'सुषुप्तस्थान एकीभूतः' इत्यादिवाक्यं प्रागेवोदाहृतम्। अत्रापि तृतीयपादत्वेनोक्ते प्राज्ञशब्दितानन्दमये सूक्ष्मतरोपाधिकत्वसामान्येनेश्वरस्यान्तर्भावो विवक्षितः। तथा च वाक्यशेषस्य 'एष सर्वेश्वरः' इत्यादेरानन्दमयेश्वरयोरभेदविवक्षया प्रवृत्तत्वान्नानुपपत्तिः। तथा तुरीयपादप्रतिपादकमिदं वाक्यम्— 'अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते' इति। अदृश्यं चक्षुराद्यविषयम्। अव्यवहार्यं प्रवृत्तिनिवृत्तिलक्षणव्यवहारागोचरम्। अग्राह्यं कर्मेन्द्रियागोचरम्। अलक्षणमसाधारणधर्मशून्यम्। अचिन्त्यं शुष्कतर्कागोचरम्। अव्यपदेश्यं शब्दशक्त्यगोचरम्। एकात्मप्रत्ययसारम्। एकादिपदचतुष्टयस्य कर्मधारयः। स्वगतभेदशून्यत्वमेकत्वम्। सर्वदेहेषु पूर्णत्वमात्मत्वम्। प्रत्ययत्वं चिद्रूपत्वम्। सारत्वमानन्दत्वम्, 'सार आनन्द इत्यर्थः' इत्यानन्दमयाधिकरणभाष्यात्। प्रपञ्चोपशमं प्रपञ्चाभावरूपम्, कल्पितपदार्थाभावस्याधिष्ठानानतिरेकात्। यद्वा प्रपञ्चध्वंसरूपम्, ज्ञानसाध्यायाः सकारणद्वैतनिवृत्तेराधिष्ठानात्मकताया वक्ष्यमाणत्वात्। शिवं शुद्धं सर्वदोषरहितम्। अद्वैतं द्वैतरहितम्। चतुर्थं विश्वतैजसप्राज्ञरूपपादत्रयापेक्षया चतुःसंख्यापूरकं पादम्। मन्यन्ते चिन्तयन्तीति श्रुत्यर्थः। अत्र विश्वतैजसप्राज्ञलक्षणपादेषु वै-

श्वानरहिरण्यगर्भेश्वराणामन्तर्भाववचनं तैरेतेषामेकत्वचिन्तनपरम्। तथा विश्वादिपादानामोंकारावयवभूतमात्राणां चैकत्वचिन्तनमत्र विवक्षितम्। तथा च श्रुतिः— 'पादा मात्रा मात्राश्च पादाः' इति। तथा गौडपादीयवचनमपि— 'ओंकारं पादशो विद्यात्पादा मात्रा न संशयः' इति। न संशय इत्यस्यायमभिप्रायः— विश्वादिपादानां मात्राणां च यावत्संशयनिवृत्त्येकत्वं चिन्तनीयमिति। मात्रास्वरूपं च श्रुत्यैव दर्शितम्— 'अकार उकारो मकार इति' इति। एवं विश्वादिपादानां वैश्वानरादीनां मात्राणां चैकत्वचिन्तनं सर्वेषामेतेषां निष्प्रपञ्चब्रह्मात्मकतुर्यपादे चिन्मात्रे प्रविलापनार्थम्। तत्र चायं क्रमः— विश्ववैश्वानराकाराणामेकत्वं प्रथमं संचिन्त्य पश्चात्तैजसहिरण्यगर्भोकाराणामेकत्वं चिन्तयेत्। तत ईश्वरप्राज्ञमकाराणामप्येकत्वं चिन्तयेत्। तथा चिन्ताक्रमेणैव प्रविलापयेत्। अकारादित्रयमुकारे, उकारादित्रयं मकारे, मकारादित्रयं चिन्मात्रे तुरीयपादे प्रविलापयेत्। चिन्मात्रे प्रविलाप्य च चित्तं तत्रैव स्थापयेत्। उकारादौ प्रविलापनं नामाकारादित्रयमुकाराद्व्यतिरेकेण नास्तीत्याहार्यनिश्चयः। एवं प्रत्यहमुक्तप्रकारेण समाधिं कुर्वतो ब्रह्मसाक्षात्कारो भवति। ततश्च ब्रह्मप्राप्त्या कृतकृत्यतेति माण्डूक्यश्रुत्यभिप्रायः। इदं सर्वं माण्डूक्यश्रुतेः संग्रहेण तात्पर्यकथनपरस्य भाष्यकृद्भिः कृतस्य पञ्चीकरणस्य व्याख्यानरूपे वार्त्तिके सुरेश्वराचार्यैरभिहितम्— 'अकारमात्रं विश्वः स्यादुकारस्तैजसः स्मृतः। प्राज्ञो मकार इत्येवं परिपश्येत्क्रमेण तु॥' अत्र विश्वादिषु वैश्वानरादीनामन्तर्भावं

सिद्धं कृत्वा न पृथगुपादानं कृतमिति मन्तव्यम् । 'समाधिकालात्प्रागेवं विचिन्त्यातिप्रयत्नतः । स्थूलसूक्ष्मक्रमात्सर्वं चिदात्मनि विलापयेत् ॥ अकारं पुरुषं विश्वमुकारे प्रविलापयेत् ।' पुरुषोऽत्र वैश्वानरः । 'उकारं तैजसं सूक्ष्मं मकारे प्रविलापयेत् ॥' अत्र समष्टिसूक्ष्मशरीरनियन्तृतया तदुपहितः परमेश्वरः सूक्ष्मशब्दार्थः । 'मकारं कारणं प्राज्ञं चिदात्मनि विलापयेत् ।' अत्रान्तर्यामी मायामात्रोपाधिकः कारणशब्दार्थः । 'चिदात्माहं नित्यशुद्धबुद्धमुक्तसदद्वयः ॥ परमानन्दसंदोहवासुदेवोऽहमोमिति ।' यतोऽहं चिदात्मावशेषितः, अतोऽहं नित्यशुद्धादिरूपो वासुदेव इत्यर्थेऽङ्गीकारात्मक ओंकार इत्यर्थः । इतिशब्दश्चोत्तरश्लोकान्वयी । 'ज्ञात्वा विवेचकं चित्तं तत्साक्षिणि विलापयेत् ॥' इत्युक्तप्रकारेण केवलं चिदात्मानमवशिष्टं ज्ञात्वा विवेचकं विलापकं तच्चित्तं साक्षिणि यथोक्ते वासुदेवे विलापयेत्स्थापयेदित्यर्थः । 'चिदात्मनि विलीनं चेत्तच्चित्तं नैव चालयेत् । पूर्णबोधात्मनासीत पूर्णाचलसमुद्रवत् ॥' चिरकालं समाधिं कुर्यादिति वार्त्तिकार्थः । 'एवं समाहितो योगी श्रद्धाभक्तिसमन्वितः । जितेन्द्रियो जितक्रोधः पश्येदात्मानमद्वयम् ॥ आदिमध्यावसानेषु दुःखं सर्वमिदं यतः । तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवेत्सदा ॥' यतस्तत्त्वनिष्ठाव्यतिरिक्तं पुरुषार्थसाधनत्वेन लोकशास्त्रसिद्धं सर्वं कालत्रयेऽपि दुःखाविनाभूतम्, तस्मात्सर्वं विधिना संन्यस्योक्तरीत्या तत्त्वनिष्ठां समाधिलक्षणां कुर्यादित्यर्थः । तदेवाह—'इमां विद्यां प्रयत्नेन योगी संध्यासु सर्वदा । समभ्यस्येदिहामुत्रभोगानासक्तधीः

अब्रह्मात्मकतुरीयपादप्रतिपत्तिसौकर्याय स्थूलसूक्ष्मसूक्ष्मतरोपाधिसाम्याद्विराडादीन्विश्वादिष्वन्तर्भाव्य, 'जागरितस्थानो बहिःप्रज्ञः' इत्यादिना विश्वादिपादान्नय-

---

सुधीः ॥' इति । इमां समाधिलक्षणां विद्यां सुधीरास्तिकतमो विरक्तो भूत्वा संध्यासूपक्रम्य सदाभ्यस्येदित्यर्थः । 'यः पश्येत्सर्वगं शान्तमानन्दात्मानमद्वयम् । न तेन किंचिदातव्यं ज्ञातव्यं वावशिष्यते ॥ कृतकृत्यो भवेद्विद्वाञ्जीवन्मुक्तो भवेत्सदा । अविद्यातिमिरातीतं सर्वाभासविवर्जितम् ॥ आनन्दममलं शुद्धं मनोवाचामगोचरम् । वाच्यवाचकनिर्मुक्तं हेयोपादेयवर्जितम् ॥ प्रज्ञानघनमानन्दं वैष्णवं पदमश्नुते ।' इति । आभासपदं चिदाभासपरम् । वाच्या विश्वादयः । वाचका अकारादयः, प्रकृतत्वात् । हेयं दुःखम् । उपादेयं विषयसुखमित्यर्थः । तथा माण्डूक्यश्रुतौ समाधिनिष्ठाविवक्षामभिप्रेत्य गौडपादीयेऽप्युक्तम् — 'युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम् । प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥' इति संक्षेपः । ननु श्रवणादिरूपेण सांख्यमार्गेणैव तत्त्वप्रतिपत्तिसंभवात्किं मुमुक्षोर्योगविधिनेत्यत आह—**प्रतिपत्तिसौकर्यायेति** । यस्य मुमुक्षोः संन्यासिनो बुद्धिमान्द्याद्वा कौशलसत्त्वेऽपि न्यायव्युत्पादनकुशलाचार्याद्यभावाद्वा सांख्यमार्गो न संभवति, तस्यानायासेन ब्रह्मतत्त्वप्रतिपत्तिसाधनतया बुद्धिपूर्वकप्रविलापनक्रमेण समाधिविधानं माण्डूक्यादावुक्तम् । माण्डूक्यतापनीयपञ्चीकरणादौ विहितं ब्रह्मोपासनं प्र-

रूरुपत् । अतः प्राज्ञशब्दित आनन्दमयेऽव्याकृतस्येश्वरस्यान्तर्भावं विवक्षित्वा तस्य सर्वेश्वरत्वादितद्धर्मवचनमिति । इत्थमेव भगवत्पादैर्गौडपादीयविवरणे व्याख्यातम् ॥

दृग्दृश्यविवेके तु चित्रदीपव्युत्पादितं कूटस्थं जीवकोटावन्तर्भाव्य चित्त्रैविध्यप्रक्रियैवालम्बितेति विशेषः ।

---

कृत्य ध्यानदीपे श्रीविद्यारण्यगुरुभिरधिकारी दर्शितः— 'अत्यन्तबुद्धिमान्द्याद्वा सामग्र्या वाप्यसम्भवात् । यो विचारं न लभते ब्रह्मोपासीत सोऽनिशम् ॥' इति । अव्याकृतस्येति । अनभिव्यक्तजगद्वाचिनाव्याकृतपदेन लक्षणया परमेश्वरस्तत्र व्यवहृत इति कृत्वा तेन तन्निर्देशः कृतः । माण्डूक्यश्रुत्युक्तानन्दमयस्येश्वरत्ववचनं तदभेदविवक्षयेत्येतन्माण्डूक्यश्रुतिव्याख्यानरूपस्य गौडपादीयस्य विवरणरूपे भाष्ये भाष्यकारैरेवोक्तमित्याह— इत्थमेवेति ॥

श्रीविद्यारण्यगुरुभिश्चित्रदीपे स्वोक्तं चिच्चातुर्विध्यं विहाय ग्रन्थान्तरे 'जीव ईशो विशुद्धा चित्' इति वृद्धवचनसिद्धं चित्त्रैविध्यमेवावलम्ब्य जीवस्य त्रैविध्याख्यो विशेष उक्त इत्याह— दृग्दृश्यविवेके त्विति । तुशब्द उक्तविशेषार्थः । जीवकूटस्थस्य

**तत्र ह्युक्तम्— जलाशयतरङ्गबुद्बुदन्यायेनोपर्युपरिक-ल्पनाज्जीवस्त्रिविधः पारमार्थिको व्यावहारिकः प्राति-भासिकश्चेति। तत्रावच्छिन्नः पारमार्थिको जीवः, त-स्मिन्नवच्छेदकस्य कल्पितत्वेऽप्यवच्छेद्यस्य तस्याकल्पि-**

---

जीवकोटावन्तर्भावमेव दर्शयति— **तत्रेति**। दृग्दृश्यविवेकाख्य-ग्रन्थ इत्यर्थ। हिशब्दः प्रसिद्धिद्योतकः। **जलाशयतरङ्गेति**। न्यायो दृष्टान्तः। यथा समुद्रादिजलाशये तरङ्गा उपरिभावेन तिष्ठन्ति तेषु चोपरिभावेन बुद्बुदास्तिष्ठन्ति; एवं कूटस्थस्योपरि व्यावहारिकान्तःकरणप्रतिबिम्बरूपो यावद्व्यवहारमनुवर्तमानो व्या-वहारिकजीवः कल्प्यते, तस्य चोपरिभावेन स्वप्नकाले वासनाम-यप्रातिभासिकरथादिवद्वासनामयान्तःकरणप्रतिबिम्बरूपः प्राति-भासिकजीवः कल्प्यत इत्यर्थः। **तत्रेति**। त्रिविधजीवमध्य इ-त्यर्थ.। **अवच्छिन्न इति**। देहद्वयावच्छिन्नकूटस्थचैतन्यरूप आत्मा पारमार्थिकजीव इत्यर्थः। 'अहं ब्रह्मास्मि' इत्यादिमहा-वाक्येषु जीवब्रह्मणोरभेदः प्रतिपाद्यते। स च पारमार्थिकजीवक-ल्पने सति निर्वहति, अन्यथा प्रातिभासिकव्यावहारिकजीवयोः शुक्तिरूप्यादिवत्स्वरूपतो मिथ्यात्वेन सत्यब्रह्माभेदायोगात्। देह-द्वयावच्छिन्नकूटस्थरूपपारमार्थिकजीवस्य त्ववच्छेदकीभूतदेहद्वयस्य कल्पितत्वेऽपि स्वतः सत्यत्वात्संभवति ब्रह्माभेद इति पारमार्थिक-जीवकल्पनायाः प्रयोजनं दर्शयति— **तस्मिन्निति**। अवच्छिन्न-

**तत्वेन ब्रह्मणोऽभिन्नत्वात् । तमावृत्य स्थितायां माया-यां कल्पितेऽन्तःकरणे चिदाभासोऽन्तःकरणतादात्म्या-पत्त्या 'अहम्' इत्यभिमन्यमानो व्यावहारिकः, तस्य मायिकत्वेऽपि यावद्व्यवहारमनुवृत्तेः । स्वप्ने तमप्यावृत्य**

---

जीव इत्यर्थः । व्यावहारिकजीवं निरूपयति— **तमिति** । कूट-स्थमात्मानमावृत्याविद्याया स्थितायां सत्यां कूटस्थात्मनि कल्पितं यदन्तःकरणं तत्र यश्चिदाभासः स व्यावहारिकजीव इत्यर्थः । तदुक्तम्— 'कूटस्थे कल्पिता बुद्धिस्तत्र चित्प्रतिबिम्बकः' इति । **अहमित्यभिमन्यमान इति** । 'अहम्' इत्येवमाकारकाभिमान-कर्तेत्यर्थः । नन्वहमाकारवृत्तिरूपेण परिणममानस्यान्तःकरणस्यै-वाहमभिमानवत्त्वं युक्तं न तु चित्प्रतिबिम्बस्य, अत आह— **अन्तःकरणेति** । तस्य व्यावहारिकत्वे युक्तिमाह— **तस्येति** । न च व्यावहारिकजीवे मानाभाव इति वाच्यम् । 'अहं कर्ता भोक्ता' इत्यादिरूपाहमनुभवस्य तत्र मानत्वात्, कर्तृत्वभोक्तृत्वाद्यात्मकसं-साराश्रयत्वस्यान्यत्रायोगाच्च । न चान्तःकरणे तत्संभवः, तस्य चि-दाभासशून्यस्य चेतनधर्मत्वेन प्रसिद्धकर्तृत्वाद्याश्रयत्वायोगात्, चि-दाभासस्य तु चेतनात्मप्रतिबिम्बतया मिथ्याभूतस्यापि चेतनत्व-व्यवहारयोग्यत्वेन तद्धर्माणां चेतनधर्मत्वप्रसिद्धिविरोधाभावात् । पा-रमार्थिकजीवस्य च संसाराश्रयत्वं न संभवति, तस्य कूटस्थत्वादि-ति भावः । **तमपीति** । व्यावहारिकजीवमपीत्यर्थः । व्यावहारिक-जीवो हि जाग्रद्दशायामात्मानं ब्राह्मणं देवदत्तं यज्ञदत्तपुत्रं विष्णुभक्तं

**स्थितया मायावस्थाभेदरूपया निद्रया कल्पिते स्वाप्न-देहादावहमभिमानी प्रातिभासिकः, स्वप्नप्रपञ्चेन सह तद्द्रष्टुर्जीवस्यापि प्रबोधे निवृत्तेरिति। एवमेते प्रतिबि-म्बेश्वरवादिनां पक्षभेदा दर्शिताः॥**

---

मन्यते। स्वाप्नजीवस्तु स्वप्नावस्थायामात्मानं क्षत्रियं विष्णुशर्मनामानं नारायणपुत्रं महादेवभक्तं मन्यते। अतो जाग्रज्जीवस्यावरणं सिद्धम्। प्रातिभासिकजीवकल्पकमाह— **निद्रयेति**। ननु मायायाः सर्वकल्पकत्वाभ्युपगमात्कथ निद्रायाः कल्पकत्वम्, अप-सिद्धान्तापत्तेरित्याशङ्क्य निद्रायास्तदवस्थारूपत्वाभ्युपगमान्नोक्त-दोष इत्याशयेनाह— **मायेति**। न च निद्राया मायालक्षणाभा-वात्कथ तदवस्थाविशेषरूपत्वमिति वाच्यम्। आवरणविक्षेपश-क्तिमत्त्वं हि मायालक्षणम्, तस्य लक्षणस्य जाग्रज्जीवावारिकायां स्वाप्नजगदात्मकविक्षेपकारिण्यां च निद्रायामक्षतत्वादिति भावः। प्रातिभासिकजीवकल्पनायाः प्रयोजनमाह— **स्वाप्नदेहादाविति**। व्यावहारिकजीवस्यावृतत्वेन स्वप्नकालेऽहमभिमानकर्तृत्वासंभवा-दिति भावः। तस्य प्रातिभासिकत्वे हेतुमाह— **स्वप्नप्रपञ्चेनेति**। प्रबोधकाले 'ब्राह्मणोऽहम्, न क्षत्रियः' इत्यादिरूपेण बोधेन स्वप्नद्रष्टुः क्षत्रियादिरूपस्य बाधानुभवादिति भावः। ईश्वरविषय उक्तवक्ष्यमाणप्रकारभेदज्ञानार्थमुपसंहरति— **एवमिति**॥

बिम्बचैतन्यमेवेश्वरो न प्रतिबिम्बविशेष इति वक्ष्यमाणविशे-

विवरणानुसारिणस्त्वाहुः— 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥' इति स्मृत्यैकस्यैवाज्ञानस्य जीवेश्वरविभागोपाधित्वप्रतिपादनाद्बिम्बप्रतिबिम्बभावेन जीवेश्वरयोर्विभागः । नोभयोरपि प्रतिबिम्बभावेन, उपाधिद्वयमन्तरेणोभयोः प्रतिबिम्बत्वायोगात् । तत्रापि प्रतिबि-

---

षार्थकस्तुशब्दः । विभेदजनकत्वं जीवेश्वरभेदस्थितिप्रयोजकत्व विवक्षितम् । न तु यथाश्रुतम्, तद्भेदस्यानादित्वाभ्युपगमात् । **आत्यान्तिकमिति** । स्वापप्रलयादावज्ञानकार्यनाशेन तत्कारणाज्ञानस्यापि नाशोऽस्ति, परिणामपरिणामिनोरभेदात् । स चाज्ञाननाशो नात्यन्तिकः, पुनरुत्थानात् । मुक्तौ तु तत्त्वज्ञानेन स्वरूपेणापि नाशोऽस्ति । स चात्यन्तिकः, पुनरुत्थानाभावादिति मत्वाज्ञाननाशस्यात्यन्तिकत्वं विशेषण दत्तम् । यद्वा जीवन्मुक्तिकालेऽज्ञानस्यावरणांशेन नाशोऽपि विक्षेपांशेन नाशाभावादनात्यन्तिकः स नाशः । विदेहमुक्तौ त्वात्यन्तिकोऽज्ञाननाश इति तदभिप्रायं तद्विशेषणमिति भावः । **प्रतिबिम्बत्वायोगादिति** । न च 'जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति' इति श्रुत्योभयोः प्रतिबिम्बत्वप्रतिपादनविरोध इति वाच्यम् । प्रतिबिम्बत्ववद्बिम्बत्वस्यापि कल्पिततया श्रुतिगताभासपदेन प्रतिबिम्बवद्बिम्बस्यापि ग्रहणोपपत्तेः । ननु लोके प्रतिबिम्बत्वविशिष्टमुखे

म्बो जीवो बिम्बस्थानीय ईश्वरः। तथा सत्येव लौकि-

मुखाभासत्वव्यवहारवद्बिम्बत्वविशिष्टमुखे तथा व्यवहाराभावादा-भासपदं मुख्यवृत्त्या बिम्बचैतन्यं प्रतिपादयितुं न शक्नोतीति खलु प्रतिबिम्बवद्बिम्बस्यापि विशिष्टरूपेण कल्पिततया कल्पि-तत्वगुणयोगेन बिम्बपरमाभासपदं वक्तव्यम्। तच्च न संभवति, सकृदुच्चरितस्याभासपदस्य मुख्यवृत्त्या प्रतिबिम्बपरत्वं गुणवृत्त्या बिम्बपरत्वमिति कल्पनस्य व्युत्पत्तिविरुद्धत्वात्। न चाजहल्लक्ष-णयाभासपदस्य बिम्बप्रतिबिम्बोभयपरत्वाभ्युपगमे नायं विरोध इति वाच्यम्। उभयोरपि प्रतिबिम्बरूपतामादायाभासपदस्य मु-ख्यार्थपरत्वे संभवति लक्षणाकल्पनाया एव निर्मूलत्वादिति चेत्, उच्यते— यथाश्रुतं जीवेशयोरुभयोरपि प्रतिबिम्बरूपत्वं न सं-भवति, बिम्बभूतचैतन्यस्य पूर्ववदेकत्वेनोपाधिभेदं विना प्रति-बिम्बद्वयासंभवात्। न च 'माया चाविद्या च स्वयमेव भवति' इति वाक्यशेषेण मायाविद्यारूपोपाधिद्वयप्रतिपादनान्न प्रतिबि-म्बद्वयानुपपत्तिरिति वाच्यम्। तेन स्वयंशब्दोपात्तायाः प्रकृत-मूलप्रकृतेर्मायात्वाविद्यात्वलक्षणरूपभेदप्रतिपादनेऽपि प्रतिबिम्ब-द्वयापेक्षितोपाधिद्वयाप्रतिपादनान्मायाविद्ययोः स्वरूपतो भेदस्य सिद्धान्तविरुद्धत्वाच्च। तस्माद्यथाश्रुतासंभवादेकस्यैवाज्ञानस्य जीवे-शविभागप्रयोजकत्वप्रतिपादकस्मृत्यनुरोधाच्च 'जीवेशावाभासेन करोति' इति श्रुतावाभासपदमजहल्लक्षणया बिम्बप्रतिबिम्बो-भयपरमिति विवरणानुसारिणामाशयः। **तत्रापीति**। बिम्बप्रति-बिम्बयोरुभयोर्मध्येऽपीत्यर्थः। तत्र युक्तिमाह— **तथा सत्येवेति**।

कबिम्बप्रतिबिम्बदृष्टान्तेन स्वातन्त्र्यमीश्वरस्य तत्पारतन्त्र्यं जीवस्य च युज्यते ; 'प्रतिबिम्बगताः पश्यन्नृजुवक्रादिविक्रियाः । पुमान्क्रीडेद्यथा ब्रह्म तथा जीवस्थविक्रियाः ॥' इति कल्पतरूक्तरीत्या 'लोकवत्तु ली-

---

बिम्बचैतन्यस्येश्वरत्वाभ्युपगमे मत्येवेत्यर्थं । **स्वातन्त्र्यमिति** । 'एष सर्वेश्वर एष भूताधिपतिः' इत्यादिश्रुतिसिद्धमिति शेष । **तत्पारतन्त्र्यमिति** । 'एष ह्येव साधु कर्म कारयति' 'य आत्मानमन्तरो यमयति' 'ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा' इत्यादिश्रुतिस्मृतिसिद्धमिति शेषः । लौकिकदृष्टान्तमेव कल्पतरुश्लोकोदाहरणेन दर्शयति— **प्रतिबिम्बगता इति** । यथा लोके कश्चित्पुरुषः स्वप्रतिबिम्बगता ऋजुवक्रादिविक्रिया बिम्बभूतस्वप्रयुक्ताः पश्यन्क्रीडति, तथा ब्रह्मापि जीवस्थविक्रियाः प्राणिकर्मानुसारेण स्वप्रयुक्ताः पश्यन्क्रीडतीति योजना । कल्पतरूक्तरीत्येश्वरस्य स्वातन्त्र्यप्रतिपत्त्युपयोगिन्येश्वरस्य स्वातन्त्र्यप्रतिपादकं सूत्रमपि संगच्छत इत्यर्थः । सूत्रार्थस्तु— ईश्वरस्याप्तकामत्वेन प्रयोजनोद्देशाभावात्सृष्ट्यादिव्यापारेषु प्रवृत्तिर्न संभवतीति पूर्वपक्षव्यावृत्त्यर्थस्तुशब्दः । ईश्वरस्य सृष्ट्यादिप्रवृत्तिलक्षणक्रिया केवलं प्रयोजनोद्देशं विनैव लीला । लोकवत् , यथा लोके सार्वभौमादेः सर्वैर्मानुषैर्भोगैः संपन्नतमस्य प्रयोजनाभिसंधिं विनैव क्रीडा दृश्यते तद्वत् । किं चेश्वरस्य प्रयोजनोद्देशाभावेऽपि स्वभावादेव सृष्ट्यादिप्रवृत्तिरुपपद्यते । दृश्यते

**लाकैवल्यम्' इति सूत्रमपि संगच्छते। अज्ञानप्रतिबिम्बितस्य जीवस्यान्तःकरणरूपोऽज्ञानपरिणामभेदो विशेषाभिव्यक्तिस्थानं सर्वतः प्रसृतस्य सवितृप्रकाशस्य दर्पण इव। अतस्तस्य तदुपाधिकत्वव्यवहारोऽपि। न**

---

हि सुखोद्रेकानुभवप्रयुक्ता हासगानादिरूपा प्रयोजनोद्देशरहिता लीला प्राणिनां स्वाभाविकी। न हि तत्र प्रयोजनमणुमात्रमपि संभावयितुं शक्यते, दुःखोद्रेके रोदनवत्सुखोद्रेके हासगानादेः प्रयोजनरहितस्य सर्वानुभवसिद्धत्वात्। अत एव हसितरुदितादिषु कारणमेव पृच्छन्ति, न प्रयोजनम्। उक्तं च माण्डूक्यश्रुतौ —'देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा' इति। एष सृष्ट्यादिव्यापार इत्यर्थः। किं च स्वप्नसृष्टिवन्मायामयी प्रपञ्चसृष्टिरस्माभिरुपेयते। न च तत्र प्रयोजनप्रश्नो न्याय्यः, स्वप्नसृष्टौ प्रयोजनप्रश्नादर्शनादिति भावः। ननु यद्यज्ञानं जीवस्योपाधिस्तर्हि व्यर्थमन्तःकरणस्य जीवोपाधित्ववर्णनं सूत्रभाष्यादिषु, तत्राह— **अज्ञानेति**। **विशेषाभिव्यक्तिस्थानमिति**। अविद्याप्रतिबिम्बचैतन्यरूपस्य सुषुप्तिसाधारणस्य प्रमातृत्वकर्तृत्वभोक्तृत्वादिविशेषरूपेण याभिव्यक्तिरुपलब्धिस्तस्याः स्थानमुपाधिरित्यर्थः। एतदुक्तं भवति— कर्तृत्वादिधर्माणां केवलाज्ञानपरिणामत्वाभावेन तदुपाधिमात्रान्न जीवस्य कर्तृत्वादिधर्मरूपविशेषलाभः, किं तु कर्तृत्वादिविशेषवदन्तःकरणतादात्म्याध्यासादेव तल्लाभ इति न तदुपाधित्वनिरूपणं व्यर्थमिति। **अत इति**। अन्तःकरणस्य

तावताज्ञानोपाधिपरित्यागः, अन्तःकरणोपाधिपरिच्छिन्नस्यैव चैतन्यस्य जीवत्वे योगिनः कायव्यूहाधिष्ठानानुपपत्तेः । न च योगप्रभावाद्योगिनोऽन्तःकरणं काय-

---

विशेषाभिव्यक्तिस्थानत्वाभ्युपगमादित्यर्थः । व्यवहारोऽपीति । 'कार्योपाधिरयं जीव.' इति श्रुतौ सूत्रभाष्यादिषु चेति शेषः । 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥' इति विष्णुपुराणवचने जीवस्याज्ञानोपाधिकत्वव्यवहारवदित्यपेरर्थः । ननु 'कार्योपाधिरयं जीवः' इति श्रुतिबलादज्ञानोपाधिपरित्याग उचितः, कार्योपाधिकत्वविशेषणस्य कारणोपाधिकत्वव्यावर्तकत्वादित्याशङ्क्य स्मृतिविरोधान्न तस्य कारणोपाधिव्यावर्तकत्वमुपेयत इत्याशयेनाह— न तावतेति । श्रुतौ कार्योपाधिकत्वविशेषणमात्रेणेत्यर्थः । ननु श्रुतिविरोधे स्मृतेरेवान्यथानयनमुचितम् । तन्नयनप्रकारश्चेत्थम्— स्मृतावज्ञानपदं तत्कार्यान्तःकरणपरम् । जीवोपाध्यन्तःकरणस्य नानात्वेऽप्यज्ञान इत्येकवचनं जात्यभिप्रायम् । तथा चान्तःकरणावच्छिन्न आत्मा जीवस्तदनवच्छिन्न आत्मेश्वर इति जीवब्रह्मविभागप्रयोजकमन्तःकरणमित्यर्थो भविष्यतीतीमामाशङ्कां निवर्तयितुं कार्योपाधिमात्रस्य जीवत्वोपाधित्वं निराकरोति— अन्तःकरणोपाधिपरिच्छिन्नस्यैवेति । नाज्ञानोपाधिकस्येत्येवकारार्थः । अनुपपत्तेरिति । कायव्यूहाधिष्ठानं हि युगपदनेकशरीरनियन्तृत्वम् । तच्च योगिनो योगप्रभावान्निर्मितेषु सर्वशरीरेषु युगपदवस्थितस्य

व्यूहाभिव्यक्तियोग्यं वैपुल्यं प्राप्नोतीति तदवच्छिन्नस्य कायव्यूहाधिष्ठानं युज्यत इति वाच्यम् । 'प्रदीपवदावेशस्तथा हि दर्शयति' इति शास्त्रोपान्त्याधिकरणभाष्यादिषु कायव्यूहे प्रतिदेहमन्तःकरणस्य चक्षुरादिवद्भिन्नस्यैव योगप्रभावात्सृष्टेरुपवर्णनात् । प्रतिबिम्बे वि-

---

वक्तव्यम् । न चान्तःकरणावच्छिन्नचैतन्यरूपस्य योगिनस्तत्संभवति, तस्य परिच्छिन्नत्वात् । अज्ञानस्य जीवोपाधित्वे तु तत्संभवति, तस्य व्यापकत्वेन तदुपाधिकस्य योगिजीवस्य युगपत्सर्वशरीरेषु संनिधानोपपत्तेः । तथा च श्रुत्यपेक्षया स्मृतेर्दुर्बलत्वेऽपि कायव्यूहाधिष्ठानानुपपत्तिसहितस्मृतेर्बलवत्त्वात्तदनुरोधेन 'कार्योपाधिरय जीवः' इति श्रुतौ कार्योपाधिपदं स्वरूपकथनमात्रपरम्, न कारणोपाधिव्यावर्तकविशेषणपरमिति भाव. । **वैपुल्यमिति** । व्यापकत्वमित्यर्थः । **अधिष्ठानमिति** । प्रेरणमित्यर्थः । **प्रदीपवदिति** । यथैकस्य प्रदीपस्यानेकवर्त्तिष्वावेशः, तथा योगिनो योगप्रभावादनेकदेहेष्वेकदावेशः । यद्यपि प्रदीपस्य वर्त्त्याविष्टदीपानां च भेदोऽस्ति योगिनस्तु सर्वदेहेष्वैक्यमिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमस्ति, तथापि दीपत्वजात्यभेदं व्यक्तिष्वारोप्य तयोः सगतिरवगन्तव्या । तथा हि दर्शयति श्रुतिरेकस्य योगिनोऽनेकधाभावम् 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा' इत्यादिका । न च योगिनो युगपदनेकशरीरेष्ववस्थानमन्तरेण श्रुतिसिद्धानेकधाभाव उपपद्यत इति सूत्रार्थः । **सृष्टेरु-**

पवर्णनादिति । तथा चैकस्यैवान्तःकरणस्य कायव्यूहाभिव्यक्तियोग्यवैपुल्याभ्युपगमे भाष्यादिविरोध इति भावः । अत्र यद्यपि योगिनो निजसिद्धान्तःकरणमेव योगप्रभावाद्वैपुल्यं प्राप्य स्वावच्छिन्नचैतन्यरूपस्य योगिनः कायव्यूहाधिष्ठानभोगादिकं घटयतीत्यत्रैव भाष्यादीनां तात्पर्यं वक्तुमुचितं न तु यथाश्रुतनानान्तःकरणसर्गे, अनागतानेकान्तःकरणसृष्ट्युपगमेऽसत्कार्यवादापातात्कल्पनागौरवाच्च । हिरण्यगर्भादीनां योगप्रभावादेवाण्डव्यापिसमष्ट्यन्तःकरणाभ्युपगमाच्च । न हि हिरण्यगर्भादीनां पूर्वजन्मनि यजमानावस्थायां तदीयान्तःकरणानां व्यापित्वे प्रमाणमस्ति, तथा सत्यस्मदाद्यन्तःकरणानामपि व्यापित्वापत्तेः । भाष्यादिष्वन्तःकरणसृष्टिवर्णनस्य मतान्तराभिप्रायत्वोपपत्तेश्च । 'एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया' इति भाष्य एव मतान्तरोपदर्शनात् । यद्यपि योगशास्त्रेष्वेव चैषा प्रक्रियेत्येवकारान्वयोपपत्तिस्तथापि शास्त्रोनान्त्याधिकरणयथाश्रुतभाष्याद्यभिप्रायेणेदं दूषणमिति मन्तव्यम् । वस्तुतस्त्वन्तःकरणावच्छिन्नं चैतन्यं जीवस्तदनवच्छिन्नमीश्वर इति पक्षेऽण्डान्तर्गतचैतन्यस्य सर्वात्मना तदवच्छेदादनवच्छिन्नचैतन्यरूपेश्वरस्याण्डाद्बहिरेव सत्त्वं स्यादिति वक्ष्यमाणदूषणे तात्पर्यम् । यदि चानवच्छिन्नं चैतन्यमीश्वर इत्यनेन निरुपाधिकं चैतन्यमीश्वर इति विवक्षितं तदा तस्य सर्वत्र सत्त्वेनाण्डाद्बहिरेव सत्त्वापत्तिदोषाभावेऽपि 'कारणोपाधिरीश्वरः' इति श्रुतिविरोधदोषो दुर्वारः । तस्मात्कारणोपाधिकत्वमीश्वरस्येव जीवस्याप्युपगन्तव्यं स्मृत्यनुसारादिति स्थितम् ।

म्बाद्भेदमात्रस्याध्यस्तत्वेन स्वरूपेण तस्य सत्यत्वान्न प्रतिबिम्बजीवस्य मुक्त्यन्वयासंभव इति न तदतिरेकेण मुक्त्यन्वयायावच्छिन्नरूपजीवान्तरं वा प्रतिबिम्बजी-

---

यत्तु चित्रदीपे प्रतिबिम्बचैतन्यरूपजीवस्य स्वरूपतो मिथ्यात्वात्तस्य मुक्त्यन्वयायोग इति तदन्वययोग्यं कूटस्थनामकं जीवेश्वराविलक्षणं किंचिच्चैतन्य परिकल्प्य चिच्चातुर्विध्यं दर्शित यदपि च दृग्दृश्य-विवेके प्रतिबिम्बमिथ्यात्वमेवाश्रित्य मुक्त्यन्वयायावच्छिन्नचैतन्यस्य पारमार्थिकजीवत्वं कल्पितं तदुभयमप्ययुक्तम्, बिम्बप्रतिबिम्बयो-र्भेदमात्रस्य कल्पिततया स्वतस्तयोर्भेदे मानाभावादित्याश-येनाह— **प्रतिबिम्बे बिम्बादिति** । स्वरूपस्य कल्पितत्व-व्यवच्छेदो मात्रशब्दार्थः । **न तदतिरेकेणेति** । प्रतिबिम्ब-जीवातिरेकेण जीवान्तर वा कूटस्थशब्दित चैतन्यान्तरं वा न कल्पनीयमिति संबन्धः । एवं व्यावहारिकजीवाति-रेकेण प्रातिभासिकजीवोऽपि न कल्पनीय', प्रमाणाभावात् । न च व्यावहारिकजीवस्य स्वप्नकाल आवृतत्वेन तस्य तदा व्यवहर्तृत्वानुपपत्तिस्तत्कल्पने प्रमाणमिति वाच्यम् । जीव-चैतन्ये आवरणाभावस्यैव साक्षिनिरूपणावसरे वक्ष्यमाणत्वेन जाग्रज्जीवस्यैव स्वप्नेऽपि व्यवहारकर्तृत्वोपपत्तेः, 'योऽहं स्वप्ने श्रीकृष्णमद्राक्षं स एवेदानीं जाग्रत्पुनः पुनस्तं स्मरामि' इति जाग्रत्स्वप्नद्रष्ट्रोरभेदप्रत्यभिज्ञानाच्च, संस्कारोद्बोधाभावादि-कारणवशादेव कदाचिद्ब्राह्मणत्वाद्यप्रतीत्युपपत्तेश्च । न च

त्वातिरिक्तं जीवेश्वरविलक्षणं कूटस्थशब्दितं चैतन्यान्तरं वा कल्पनीयम् । 'अविनाशी वा अरेऽयमात्मा' इति श्रवणं जीवस्य तदुपाधिनिवृत्तौ प्रतिबिम्बभावापगमेऽपि

---

स्वप्नप्रपञ्चेन सह तद्द्रष्टुर्बाधदर्शनं प्रातिभासिकजीवकल्पने प्रमाणमिति वाच्यम् । प्रबोधकाले 'नाहं क्षत्रियः' इत्यादिरूपबाधकप्रत्ययस्यात्मन्यारोपितक्षत्रियत्वादिमात्रबाधकत्वेन स्वप्नद्रष्टुर्बाधकत्वाभावात्, अन्यथा पूर्वोदाहृततद्द्रष्ट्रैक्यप्रत्यभिज्ञानविरोधात् । तस्मात्प्रातिभासिकजीवकल्पनमपि प्रामाणिकं न भवतीति बोध्यम् । यदपि चित्त्वातुर्विध्यवादिभिरुक्तम् 'तान्येवानु विनश्यति' 'अविनाशी वा अरेऽयमात्मा' इति वाक्याभ्यां प्रकृते प्रज्ञानघनात्मनि विनाशित्वाविनाशित्वरूपविरुद्धधर्मद्वयप्रतिपादनात्तदुपपत्तये विनाशिप्रतिबिम्बव्यतिरेकेण विनाशरहितं कूटस्थचैतन्यं सिध्यतीति, तदपि मन्दम्, अविद्याप्रतिबिम्बचैतन्यरूपे जीव एव प्रतिबिम्बत्वरूपविशेषणांशनाशाभिप्रायेण विनाशवचनस्य विशेष्यचैतन्यांशाभिप्रायेण विनाशाभावप्रतिपादकवचनस्य चोपपत्तौ धर्मिभेदकल्पनस्य गौरवपराहतत्वादित्याशयेनाह— **अविनाशी वेति** । नन्वविद्याप्रतिबिम्बो जीवस्तद्बिम्ब ईश्वरो बिम्बप्रतिबिम्बानुगतं चैतन्यं शुद्धचैतन्यमिति विवरणपक्षे देहद्वयोपादानतया तदवच्छिन्नस्य पारमार्थिकजीवनामकतया कूटस्थनामकतया च चित्त्वातुर्विध्यवादिभिरङ्गीकृतस्य चैतन्यस्य कुत्रान्तर्भाव उपेयते । न तावज्जीवे शुद्धचैतन्ये वान्तर्भावः संभवति, तयोरुपादान-

**स्वरूपं न विनश्यतीत्येतत्परम्, न तदतिरिक्तकूटस्थ-नामकचैतन्यान्तरपरम्। जीवोपाधिनान्तःकरणादिनावच्छिन्नं चैतन्यं बिम्बभूत ईश्वर एव, 'यो विज्ञाने तिष्ठन्' इत्यादिश्रुत्येश्वरस्यैव जीवसंनिधानेन**

---

त्वाभावेन देहद्वयोपादानस्य कूटस्थस्य तयोरन्तर्भावायोगात्। नापि बिम्बभूतेश्वरे तस्यान्तर्भावः सभवति, ईश्वरस्य जीव-तदुपाध्यन्त करणादिसंनिहिततया देहादिविकारेष्ववस्थाने प्रमाणाभावात्कूटस्थनामकचैतन्यस्य च कूटस्थवादिभिस्तथात्वाङ्गीकारादित्यत आह— **जीवोपाधिनेति**। अविद्याप्रतिबिम्बरूप-जीवस्य विशेषाभिव्यक्तिप्रयोजकोपाधिनेत्यर्थः। प्राणचक्षुरादि-कमादिपदार्थः। **ईश्वर एवेति**। न शुद्ध ब्रह्म नापि प्रति-बिम्बरूपजीव इत्येवकारार्थः। चेतनाचेतनात्मकनिखिलप्रपञ्चो-पादानत्वप्रतिपादकश्रुतिस्मृतिसहस्रस्य बिम्बभूतेश्वरस्य देहाद्युपा-दानतया देहादिविकारेष्वन्तरवस्थाने प्रमाणत्वात्कूटस्थस्य च ततो भेदे मानाभावादिति भावः। न केवलमुपादानत्वप्रतिपाद-कशास्त्रमेव तत्र प्रमाणम्, किं तु चेतनाचेतनात्मकसकलजग-न्नियन्तृत्वप्रतिपादकमन्तर्यामिब्राह्मणमपि बिम्बभूतेश्वरस्य विका-रेष्वन्तरवस्थाने प्रमाणमित्याह— **'यो विज्ञाने तिष्ठन्' इत्या-दिश्रुत्येति**। 'यो विज्ञानादन्तरो यं विज्ञान न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयति' इत्यादिवाक्यमादिपदेन

तदन्तर्यामिभावेन विकारान्तरवस्थानश्रवणादिति ॥

अन्ये तु— रूपानुपहितप्रतिबिम्बो न युक्तः ;

---

गृह्यते । अत्र विज्ञानपदं जीवपरम् । बृहदारण्यके माध्यंदिनपाठे 'य आत्मनि तिष्ठन्' इति पर्यायस्थाने काण्वपाठे 'यो विज्ञाने तिष्ठन्' इति पर्यायाम्नानदर्शनेन काण्वपाठे विज्ञानपदस्यात्मपद-समानार्थकत्वावगमात् । आत्मपदं चात्र जीवपरम्, तस्य तत्र रूढत्वात् । आत्मपदस्य जीवेश्वरसाधारणत्वेऽपि नियम्यत्वलिङ्गेन प्रकृते जीवपरत्वावश्यम्भावादिति भावः । जीवसंनिधानेनेति । ईश्वरस्य जीवादिनियन्तृत्वं हि व्यवहितराजादेः प्रजानियन्तृत्व-वन्न संभवति । किं तु नियम्यजीवादिसंनिधानेनैव, 'य आत्मनि तिष्ठन्' इति सनिधानप्रतीतेरित्यर्थः । अन्तर्यामिब्राह्मणवाक्य-ग्रहणं स्मृतेरप्युपलक्षणम् । तथा च भगवद्गीतास्मृतिः— 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रा-रूढानि मायया ॥' इति । भूतानि प्राणिनः । यन्त्रं शरीरम्, तदारूढत्वं तत्राहंममाभिमानवत्त्वम् । भ्रामयन्निति । कर्मानु-सारेण प्रवर्तयन्निवर्तयंश्चेत्यर्थः । ईश्वरस्य नियन्तृत्वं मायोपाधिक-मेव न वास्तवमित्यभिप्रायेण माययेत्युक्तम् । एवं चैतन्यस्य प्रति-बिम्बमुपगच्छतां मतभेदेन जीवेश्वरविभागो दर्शितः ॥

इदानीं तदनभ्युपगन्तृणां मतेन जीवादिस्वरूपं दर्शयितुं चैत-न्यस्य प्रतिबिम्बं निराकरोति—अन्ये त्विति । रूपानुपहितेति ।

सुतरां नीरूपे । गगनप्रतिबिम्बोदाहरणमप्ययुक्तम्, गगनाभोगव्यापिनि सवितृकिरणमण्डले सलिलप्रतिबिम्बिते गगनप्रतिबिम्बत्वव्यवहारस्य भ्रममात्रमूल-

---

लोके रूपवत एव चन्द्रादेः प्रतिबिम्बो दृश्यते न रूपरहितस्य वाय्वादेरिति व्याप्तिदर्शनान्नीरूपचैतन्यस्य प्रतिबिम्बासंभव इत्यर्थः । इतश्च चैतन्यस्य न प्रतिबिम्बसंभव इत्याह— **सुतरां नीरूप इति** । अविद्यान्तःकरणादाविति शेषः । रूपवत एव द्रव्यस्य प्रतिबिम्ब इति नियमस्य वक्ष्यमाणरीत्या गगने व्यभिचारसत्त्वेऽपि रूपवत्येवोपाधौ प्रतिबिम्ब इति नियमस्य न क्वचिदपि व्यभिचार इति मत्वा सुतरामित्युक्तम् । ननु नीरूपगगनस्य कूपजलतडागादौ प्रतिबिम्बानुभवान्नीरूपद्रव्यस्य प्रतिबिम्बाभाव इति न नियमोऽस्तीत्याशङ्क्याह— **गगनेति** । कूपजलादौ तावदालोकप्रतिबिम्बः संप्रतिपन्नः । तस्मिन्गगनप्रतिबिम्बत्वभ्रमो लोकानामिति कल्प्यते । न तु वस्तुतस्तत्र गगनप्रतिबिम्बोऽस्ति, उक्तनियमविरोधात् । भ्रमप्रयोजकदोषमाह— **गगनाभोगव्यापिनीति** । आभोगो विस्तारः । गगनोपरिभागे व्याप्य वर्तमानस्य सवितृकिरणमण्डलादेर्जले प्रतिबिम्बदर्शनात्तदनुगतगगनस्य जले प्रतिबिम्बभ्रम इत्यर्थः । ननु यथा बहिः 'नीलं नभः' 'विशालं नभः' इत्यादिरूपेण गगनमनुभूयते, एवं कूपतडागादिजलेऽपि 'नीलं नभः' 'विशालं नभः' इत्यादिरूपोऽनुभवः सर्वसंप्रतिपन्नः । न च कूपजलादौ

प्रतीयमानं वैशाल्यादियुक्त नभो वस्तुतोऽस्ति । अतः प्रतिबिम्ब-रूपमेव तत्र दृश्यमानं नभ इति वक्तव्यम् । ततश्च कथं गगन-प्रतिबिम्बापलापः क्रियते । न च नीरूपस्य प्रतिबिम्बासंभव इति वाच्यम् । रूपसंख्यापरिमाणादेर्नीरूपस्यापि प्रतिबिम्बदर्शनात् । न च द्रव्यत्वमपि विशेषणं विवक्षितमिति वाच्यम् । सिद्धान्ते द्रव्यगुणादिपरिभाषाया अनभ्युपगमात्, तदभ्युपगमेऽपि गगनप्र-तिबिम्बानुभवानुरोधेन रूपोपहितद्रव्यस्य प्रतिबिम्बः, तदुपहि-तत्व च वस्तुतः स्वगतरूपेण स्वस्मिन्नारोपितरूपेण वेति नियमकल्पनोपपत्तेश्च । तथा च बहिरारोपितनैल्यादिविशिष्टगगनस्य जलादौ प्रतिबिम्बाभ्युपगमे न किंचिद्बाधकम् । न च जलादौ संप्रतिपन्नालोकप्रतिबिम्बातिरिक्तगगनप्रतिबिम्बाभ्युपगमे गौरव-मेव बाधकमिति वाच्यम् । आलोकप्रतिबिम्बे गगनप्रतिबिम्बत्व-भ्रमाभ्युपगमेऽपि तद्भ्रमविषयस्यालोकप्रतिबिम्बाधिकरणकस्य शु-क्तिरूप्यादिवदनिर्वचनीयस्य गगनप्रतिबिम्बत्वस्याभ्युपगन्तव्य-त्वेन गौरवस्य तुल्यत्वादनुभवानुसारिगौरवस्यादोषत्वाच्च । तस्मा-द्रूपवत एव द्रव्यस्य प्रतिबिम्ब इति नियमस्य गगनप्रतिबिम्बस्थले व्यभिचारो दुर्वार इति चेत्, सत्यम् । तथापि चैतन्यस्य प्रति-बिम्बो न संभवति, नीरूपान्तःकरणादेः प्रतिबिम्बोपाधित्वासं-भवादित्यत्रैव तात्पर्यम् । ननु नीरूपेऽपि ध्वनौ नीरूपद्रव्या-त्मकवर्णानां प्रतिबिम्बोऽस्तीति वक्तव्यम् । तथा सत्येव दर्पण-श्यामताया दर्पणगतप्रतिबिम्बद्वारेण बिम्बमुख इव ध्वनिगतानां तारत्वादीनां ध्वनिगतवर्णप्रतिबिम्बद्वारा वर्णेष्वारोपः संभवति

त्वात् । ध्वनौ वर्णप्रतिबिम्बवादोऽप्ययुक्तः, व्यञ्जकतया संनिधानमात्रेण ध्वनिधर्माणामुदात्तादिस्वराणां वर्णेष्वारोपोपपत्तौ ध्वनेर्वर्णप्रतिबिम्बग्राहित्वकल्पनाया निष्प्रमाणत्वात् । प्रतिध्वनिरपि न पूर्वशब्दप्रतिबिम्बः,

---

नान्यथा । एवं नीरूपान्तःकरणादौ नीरूपात्मनः प्रतिबिम्बसंभव इत्याशङ्क्य दृष्टान्तं विघटयति— ध्वनाविति । ननु पटहाद्यवाद्यविशेषादिशब्दोत्पत्तिकाले पाषाणविशेषादिसंनिहिताकाशप्रदेशेषु प्रतिध्वनिः श्रूयते । स पूर्वशब्दप्रतिबिम्ब एव न मुख्यध्वनिः, तदुत्पत्तौ कारणाभावात् । तथा च यथा नीरूपाकाशप्रदेशेषु नीरूपध्वनेः प्रतिध्वनिरूपः प्रतिबिम्बस्तथा प्रकृते किं न स्यादिति, नेत्याह— प्रतिध्वनिरपीति । न च प्रतिध्वनेरुत्पादकाभावः शङ्कनीयः, आकाशस्यैवोपादानस्य सत्त्वात्पूर्वशब्दस्य निमित्तकारणस्य सत्त्वाच्च । न च प्रतिध्वने प्रतिबिम्बत्वेऽप्याकाशगुणत्वं किं न स्यादिति वाच्यम् । बिम्बप्रतिबिम्बयोर्भेदपक्षे प्रतिध्वनिरूपप्रतिबिम्बस्य प्रातिभासिकत्वेन व्यावहारिकगुणत्वानुपपत्तेः, तदभेदपक्षे बिम्बभूतपृथिव्यादिशब्दापेक्षया प्रतिध्वनिरूपप्रतिबिम्बस्य भेदाभावेन तस्याकाशगुणत्वानुपपत्तेरिति भावः । ननु वर्णरूपप्रतिशब्दस्य वर्णप्रतिबिम्बत्वमवश्यं वाच्यं न तु साक्षाद्वर्णरूपत्वम्, प्रतिवर्णाभिव्यक्तिस्थले वर्णव्यञ्जककण्ठताल्वादेरभावात्, तथा च यथा तत्र पर्वतगुहादिसंनिहितेषु नीरूपेष्वाकाशप्रदेशेषु नीरूपाणां वर्णानां प्रतिबिम्बस्तथा प्रकृते किं

पञ्चीकरणप्रक्रियया पटहपयोनिधिप्रभृतिशब्दानां क्षितिसलिलादिशब्दत्वेन प्रतिध्वनेरेवाकाशशब्दत्वेन तस्यान्यशब्दप्रतिबिम्बत्वायोगात् । वर्णरूपप्रतिशब्दोऽपि न पूर्ववर्णप्रतिबिम्बः, वर्णाभिव्यञ्जकध्वानिनिमित्तकप्रतिध्वनेर्मूलध्वानिवदेव वर्णाभिव्यञ्जकत्वेनोपपत्तेः । तस्माद्धटाकाशवदन्तःकरणावच्छिन्नं चैतन्यं जीवस्तदनवच्छिन्नमीश्वरः । न चैवमण्डान्तर्वर्तिनश्चैतन्यस्य तत्तदन्तःकरणोपाधिभिः सर्वात्मना जीवभावेनावच्छेदात्तदवच्छेदरहितचैतन्यरूपस्येश्वरस्याण्डाद्बहिरेव सत्त्वं स्यादिति 'यो विज्ञाने तिष्ठन्' इत्यादावन्तर्यामिभावेन

---

न स्यादिति, नेत्याह— **वर्णरूपप्रतिशब्दोऽपीति** । प्रतिध्वनिर्वादित्यपिशब्दार्थः । कण्ठताल्वादिस्थलेऽपि न कण्ठादेर्वर्णव्यञ्जकत्वम्, किं तु कण्ठाद्यभिघातजन्यध्वनेः । तथा च यथा मूलध्वनिर्वर्णव्यञ्जक एव प्रतिवर्णाभिव्यक्तिस्थले उत्पन्नः प्रतिध्वनिरेव तत्र वर्णानां व्यञ्जकः संभवतीति न प्रतिवर्णानां प्रतिबिम्बरूपत्वमभ्युपगन्तव्यमित्यर्थः । चैतन्यप्रतिबिम्बनिराकरणमुपसंहरति— **तस्मादिति** । चैतन्यप्रतिबिम्बासंभवादित्यर्थः । अन्तःकरणानवच्छिन्नचैतन्यस्येश्वरत्वेऽन्तःकरणादिषु सर्वविकारेषु परमेश्वरस्यान्तर्यामिभावेनावस्थानप्रतिपादकश्रुतिविरोधमाशङ्कते — **न चैवमिति** । **विरुध्येतेति** । तथा च श्रुतिविरोधपरिहाराय

विकारान्तरवस्थानश्रवणं विरुध्येत. प्रतिबिम्बपक्षे तु ज-लगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनादे-कत्र द्विगुणीकृत्य वृत्तिरुपपद्यत इति वाच्यम्। यतः प्रति-बिम्बपक्षेऽप्युपाध्यवनन्तर्गतस्यैव चैतन्यस्य तत्र प्रति-बिम्बो वाच्यो न तु जलचन्द्रन्यायेन कृत्स्नप्रतिबिम्बः, तदन्तर्गतभागस्य तत्र प्रतिबिम्बासंभवात्; न हि मेघावच्छिन्नस्याकाशस्यालोकस्य वा जले प्रतिबिम्बव-

---

प्रतिबिम्बपक्ष एव स्वीकर्तव्य इति भावः। प्रतिबिम्बपक्षाश्रयणेऽपि श्रुतिविरोधमाशङ्क्याह—**प्रतिबिम्बपक्षे** त्विति। तुशब्द-सूचितं विशेषमेव दर्शयति—**जलगतेति**। **द्विगुणीकृत्येति**। प्रतिबिम्बरूपजीवभावेन तत्तदुपाध्यन्तर्यामिभावेन चेत्यर्थः। प्र-तिबिम्बपक्षेऽप्यन्तर्यामिब्राह्मणविरोधो दुष्परिहर इत्याह—**यत इति**। यत ईश्वरेऽन्तर्यामिब्राह्मणाज्ञस्याभावस्तुल्यः, अतो न च वाच्यमिति सबन्धः। **तत्रेति**। अन्तःकरणादावित्यर्थः। ननु यथा जले कृत्स्नस्य चन्द्रमण्डलस्य प्रतिबिम्बस्तथा कृत्स्नस्यैव चैतन्यस्यान्तःकरणादौ प्रतिबिम्बोऽस्तु, न तूपाध्यनन्तर्गत-चैतन्यभागस्याण्डाद्बहिर्भूतस्य; तथा च बिम्बभूतेश्वरस्याण्डा-न्तरपि सत्त्वान्नान्तर्यामिब्राह्मणविरोधतौल्यमिति, नेत्याह— **न त्विति**। असंभवमेव दर्शयति— **न हीति**। **आलोकस्य वेति**।

**जलान्तर्गतस्यापि तत्र प्रतिबिम्बो दृश्यते; न वा मुखादीनां प्रतिबिम्बस्थितिसमय इव जलान्तर्निमज्जनेऽपि प्रतिबिम्बोऽस्ति; अतो जलप्रतिबिम्बं प्रति मेघाकाशादेरिवान्तःकरणाद्युपाधिप्रतिबिम्बं प्रति तदनन्तर्गतस्यैव बिम्बत्वं स्यादिति बिम्बभूतस्य विकारान्तरवस्थाना**

---

बहिःस्थस्येति शेषः । **जलान्तर्गतस्यापीति** । आकाशादेरित्यनुषङ्गः । **तत्रेति** । जलादावित्यर्थः । उदाहरणान्तरमाह— **न वेति** । ततः किम्, तत्राह— **अत इति** । उपाध्यन्तर्गतभागस्य तत्र प्रतिबिम्बासंभवादित्यर्थः । **तदनन्तर्गतस्यैवेति** । चैतन्यस्येति शेषः । दृष्टानुरोधित्वात्कल्पनाया इति भावः । **विकारान्तरिति** । अण्डान्तर्गतचैतन्यभागस्योपाध्यन्तर्गतत्वात्तद्बहिःस्थितस्यैव चैतन्यस्य बिम्बत्वं वाच्यमिति बिम्बभूत ईश्वरोऽप्यखण्डाद्बहिरेव स्यादित्यर्थः । यदि च प्रतिबिम्बपक्ष ईश्वरस्य सर्वान्तर्यामित्वप्रतिपादकश्रुत्याद्यनुसारेण लोकदृष्टिमनादृत्य कृत्स्नचैतन्यप्रतिबिम्बमुपेत्यान्तर्यामिब्राह्मणाञ्जस्यमुपपाद्यते तदानवच्छिन्नचैतन्यमीश्वर इति पक्षेऽप्यन्तःकरणाभावावच्छिन्नचैतन्यमीश्वर इति विवक्षितम्, अन्तःकरणस्य कल्पितत्वेन चैतन्येऽन्तःकरणाद्यवच्छेदेनाप्यन्तःकरणाभावस्य वास्तवस्य सत्त्वेन तदवच्छिन्नचैतन्यरूपेश्वरस्य सर्वविकारान्तरवस्थानसंभवात्तत्प्रतिपादकब्राह्मणाञ्जस्यं तुल्यमिति समाधानं बोध्यम् । अभावस्यापीश्वरोपाधित्वमुक्तं तृप्तिदीपे— 'अन्तःकरणसाहित्यराहित्याभ्यां

विशिष्यते । उपाधिर्जीवभावस्य ब्रह्मतायाश्च नान्यथा ॥ यथा विधिरुपाधिः स्यात्प्रतिषेधस्तथा न किम् । सुवर्णलोहभेदेन शृङ्खलात्वं न भिद्यते ॥ अतद्व्यावृत्तिरूपेण साक्षाद्विधिमुखेन च । वेदान्तानां प्रवृत्तिः स्याद्द्विधेत्याचार्यभाषितम् ॥ इति । श्लोकानामयमर्थः — जीवत्वब्रह्मत्वयोरुपाधिरन्तःकरणसाहित्यराहित्याभ्यां विशिष्यते भिद्यते । तत्साहित्यं जीवत्वोपाधिस्तद्राहित्यं ब्रह्मताया उपाधिरिति जीवेश्वरोपाधिभेद इत्यर्थः । नान्यथा न प्रकारान्तरेण जीवभावाद्युपाधिरित्यर्थः । ननु भावस्यैवोपाधित्वं नाभावस्येत्याशङ्क्य विनिगमनाविरहमाह— यथेति । भाववदभावस्य व्यावर्तकोपाधित्वे विशेषो नास्तीत्यत्र दृष्टान्तमाह— सुवर्णेति । शृङ्खलात्वं नाम यथेच्छप्रचारव्यावर्तकत्वम् । ननु भावरूपान्तःकरणादेर्द्रष्टृत्वादिरूपेण जीवोपलब्धिसाधनत्वात्तस्य जीवोपाधित्वं युक्तमित्याशङ्क्य तर्ह्यन्तःकरणनिषेधस्यापि ब्रह्मोपलब्धिसाधनत्वात्तस्य ब्रह्मोपाधित्वं युक्तमित्यभिप्रेत्य तत्तदुपाधिनिषेधस्य ब्रह्मोपलब्धिसाधनत्वं भाष्यकारैरुक्तमित्याह—अतद्व्यावृत्तीति । अत्र तच्छब्देन ब्रह्मोच्यते, तन्न भवतीत्यतदन्तःकरणादिरूपमुपाधिजातम्, तस्यातदो व्यावृत्तिर्निषेधः, तद्रूपेण तद्बोधनद्वारेणेत्यर्थः । साक्षाद्विधिमुखेन च 'बुद्धेः साक्षी' 'मनसः साक्षी' 'सर्वस्य साक्षी' 'पश्यञ्शृण्वन्मन्वानः' इत्यादिप्रकारेण च । प्रवृत्तिर्बोधकता, ब्रह्मणि तेषां प्रामाण्यमिति । तथा चोक्तरीत्या प्रतिबिम्बावच्छेदपक्षयोरुभयोरप्यन्तर्यामिब्राह्मणाज्ञस्याभावाज्जस्ययोस्तुल्यत्वे सति, 'सुतरां नीरूपे' इत्यादिना चैतन्य-

योगादीश्वरेऽन्तर्यामिब्राह्मणाङ्गस्याभावस्तुल्यः । एते-
नावच्छिन्नस्य जीवत्वे कर्तृभोक्तृसमययोस्तत्र तत्रान्तः-
करणावच्छेद्यचैतन्यप्रदेशस्य भिन्नत्वात्कृतहानाकृता-
भ्यागमप्रसङ्ग इति निरस्तम्, प्रतिबिम्बपक्षेऽपि स्वान-
न्तर्गतस्य स्वसंनिहितस्य चैतन्यप्रदेशस्यान्तःकरणे प्रति-
बिम्बितस्य वक्तव्यतया तत्र तत्रान्तःकरणस्य गमने
बिम्बभेदात्तत्प्रतिबिम्बस्यापि भेदावश्यंभावेन दोषतौ-

---

प्रतिबिम्बासंभवस्य दर्शितत्वात्प्रतिबिम्बपक्षं त्यक्त्वावच्छेदपक्ष
एवादरणीय इति भावः । एवमवच्छेदपक्षे दोषान्तरमपि व-
क्ष्यमाणदोषतौल्यादिनैव निरस्तमित्याह— **एतेनेति । स्वा-
नन्तर्गतस्येति** । प्रागुक्तयुक्तिरत्रानुसंधेया । स्वसंनिहितस्येति
विशेषणस्यायमभिप्रायः— यदि सर्वेष्वन्तःकरणेषु तदनन्तर्गत-
स्याण्डाद्बहिर्विद्यमानस्यैव चैतन्यभागस्यैकस्य प्रतिबिम्बः संभ-
वेत्, तदा बिम्बचैतन्यप्रदेशभेदाभावात्प्रत्यन्तःकरणं बिम्ब-
चैतन्यप्रदेशभेदेन प्रतिबिम्बभेदापादनं न संभवेत् । न च तथा
संभवति, व्यवहितस्य प्रतिबिम्बायोगात् । किं तु तत्र तत्रान्तः-
करणे संनिहितस्यैव चैतन्यप्रदेशस्य बिम्बत्वं वाच्यम् । ततश्चेह
परत्र च प्रतिबिम्बभेदापादनं युक्तमिति । **दोषतौल्यादिति** ।
कृतहानाकृताभ्यागमप्रसङ्गदोषतौल्यादित्यर्थः । अविद्याया चित्प्र-
तिबिम्ब ईश्वरोऽन्तःकरणे चित्प्रतिबिम्बो जीव इति पूर्वं प्रदर्शिते

स्यात् । न चान्तःकरणप्रतिबिम्बो जीव इति पक्षे दोषतौल्येऽपि, अविद्याप्रतिबिम्बो जीवस्तस्य च तत्र तत्र गत्वरमन्तःकरणं जलाशयव्यापिनो महामेघमण्डलप्रतिबिम्बस्य तदुपरि विसृत्वरः स्फीतालोक इव तत्र तत्र विशेषाभिव्यक्तिहेतुरिति पक्षे नायं दोषः, अन्तःकरणवदविद्याया गत्यभावेन प्रतिबिम्बभेदानापत्तेरिति वाच्यम्। तथैवावच्छेदपक्षेऽप्यविद्यावच्छिन्नो जीव इत्यु-

---

संक्षेपशारीरकपक्षे दोषतौल्येऽपि विवरणादिपक्षे उक्तदोषाप्रसक्तेस्तस्योपादेयत्वं स्यादिति शङ्कते— न चेति । गत्वरं गमनशीलम् । तदुपरीति । जलाशयोपरीत्यर्थः । विसृत्वर इति । यथा तत्र तत्र जलप्रदेशेषु विसृत्वरो गमनशीलो मेघच्छिद्रेभ्यो निःसृतः स्फीतालोकखण्डो महामेघमण्डलप्रतिबिम्बस्य जलाशयव्यापकस्य विशेषेण स्फुरणहेतुः, तथा तत्र तत्रेह परत्र च कर्तृत्वभोक्तृत्वादिविशेषाभिव्यक्तिहेतुरन्तःकरणमिति पक्ष इत्यर्थः । कृतहानादिदोषाभावे हेतुमाह— अन्तःकरणवदिति । यदि प्रतिबिम्बवादिनान्तःकरणप्रतिबिम्बो जीव इति पक्षमुक्तदोषतौल्येन परित्यज्याविद्याप्रतिबिम्बो जीव इति पक्षः स्वीक्रियते, तदावच्छेदवादिनाप्यन्तःकरणावच्छिन्नो जीव इति पक्षं कृतहानादिदोषयुक्तं त्यक्त्वोक्तदोषरहितमविद्यावच्छिन्नो जीव इति मतमुपादीयत इत्याह— तथैवेति । जीव इति । उपलक्षणं चैतत् । अविद्यायाः कल्पितत्वेन वास्तवतदभावावच्छिन्नश्चिदा-

पगमसंभवात् , तत्राप्येकस्य जीवस्य क्वचित्प्रदेशे कर्तृ-त्वं प्रदेशान्तरे भोक्तृत्वमित्येवं कृतहानादिदोषापनु-त्तये वस्तुतो जीवैक्यस्य शरणीकरणीयत्वेन तन्न्याया-दन्तःकरणोपाधिपक्षेऽपि वस्तुनश्चैतन्यैक्यस्य तदवच्छे-दकोपाध्यैक्यस्य च तन्त्रसत्त्वाभ्युपगमेन तद्दोषनिरा-

---

त्मेश्वर इत्युपगमसंभवाच्चेत्यपि द्रष्टव्यम् । एवमविद्याप्रतिबिम्बो जीव इति पक्षे कृतहानादिदोषाभावमुपेत्य तस्मादस्यमविद्यावच्छि-न्नस्य जीवत्वपक्षे दर्शितम् । इदानीमन्तःकरणावच्छेदपक्षे कृतहा-नादिदोषाभावं समर्थयितुमविद्याप्रतिबिम्बो जीव इति पक्षेऽपि कृतहानादिदोषमाशङ्क्य परिहरति— **तत्रापीति** । अविद्याप्रति-बिम्बो जीव इति पक्षेऽपीत्यर्थः । **क्वचित्प्रदेश इति** । ब्राह्मणा-दिशरीरगतान्तःकरणावच्छिन्नप्रदेश इत्यर्थः । **प्रदेशान्तर इति** । देवशरीरादिगततदवच्छिन्नप्रदेश इत्यर्थः । **वस्तुत इति** । प्र-देशभेदे सत्यपीह परत्र चाविद्याप्रतिबिम्बरूपजीवैक्यमात्रेण कृत-हानादिदोषः परिहर्तव्यः प्रतिबिम्बत्वादिना गत्यन्तराभावादि-त्यर्थः । सोऽयं परिहारप्रकारोऽन्तःकरणावच्छेदपक्षेऽपि समान इत्याह— **तन्न्यायादिति** । **वस्तुत इति** । इह परत्र चान्तःक-रणावच्छेद्यचैतन्यप्रदेशभेदेऽपि चैतन्यस्य वस्तुत एकत्वान्न कृत-हानादिदोष इत्यर्थः । ननु वास्तवचैतन्यैक्यमात्रस्य जीवान्तर-साधारणत्वादन्यकृतकर्मणान्यस्य भोगप्रसङ्ग इत्यत आह—**तद-वच्छेदकेति** । तत्पदं चैतन्यपरम् । तथा चैकान्तःकरणावच्छि-

**करणसंभवाच्च । न चावच्छेदपक्षे 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमा**

---

न्नचैतन्यमेको जीवोऽन्तःकरणान्तरावच्छिन्नचैतन्यमन्यो जीव इति व्यवस्थास्वीकारान्नोक्तातिप्रसङ्ग इति भावः । अस्मिन्नवच्छेदपक्षे प्रागुक्तरीत्या वास्तवान्तःकरणाभावावच्छिन्नचैतन्यमीश्वरः 'कारणोपाधिरीश्वरः' इति श्रुत्यनुरोधेनाविद्यावच्छिन्नचैतन्यं वेश्वर इति बोध्यम् । अस्य पक्षस्य श्रुतिसूत्राभ्यां विरोधं शङ्कते— **न चावच्छेदपक्ष इति** यथैको विवस्वान्पात्रभेदेन भिन्ना अपोऽनुगच्छन्, बहुजलपात्रेषु प्रतिबिम्बितः सन्निति यावत्, बहुधा भेदरूपः क्रियते औपाधिकं नानात्वं प्रतिपद्यते, एवं देवः स्वप्रकाश आत्मा स्वत एकः सन् क्षेत्रेषूपाधिषु प्रतिबिम्बितो भेदरूपः क्रियते नानात्वं लभत इति यावत् । यथैकस्य सूर्यस्य बहुषूपाधिषु प्रतिबिम्बितत्वप्रयुक्तो भेद एवमात्मनोऽपि क्षेत्रेषु प्रतिबिम्बितत्वप्रयुक्तमेव नानात्वमिह विवक्षितमिति वक्तव्यम्, अन्यथा दृष्टान्तदार्ष्टान्तिकयोरतुल्यत्वापत्त्या तयोरसामञ्जस्यप्रसङ्गात् । तथा चावच्छेदपक्षः श्रुतिविरुद्ध इत्यर्थः । एवम् 'एक एव तु भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥' 'रूपं रूपं प्रतिरूपो बभूव' 'जीवेशावाभासेन करोति' इत्यादिश्रुतयोऽपि चैतन्यस्य प्रतिबिम्बगमकत्वेन द्रष्टव्याः । भूतानां ब्रह्मादिस्तम्बपर्यन्तानामात्मा स्वरूपभूतः परः ।

**त्मा । 'अत एव चोपमा सूर्यकादिवत्' इति श्रुतिसूत्राभ्यां विरोधः ; 'अम्बुवदग्रहणात्तु न तथात्वम्' इत्युदाहृतसूत्रानन्तरसूत्रेण यथा सूर्यस्य रूपवतः प्रतिबिम्बोदययोग्यं ततो विप्रकृष्टदेशं रूपवज्जलं गृह्यते नैवं**

---

भूते भूते इति वीप्सया सर्वे प्रतिबिम्बोपाधयो गृह्यन्ते । तेषु प्रतिबिम्बिततया व्यवस्थितः सन् बहुधा दृश्यते, स्वतस्तु शास्त्रादेकधा दृश्यते । रूपशब्द उपाधिपरः । अत्रापि वीप्सा सर्वोपाधिसंग्रहार्था । प्रतिरूपः प्रतिबिम्बः, पुरुषप्रतिबिम्बे 'पुरुषप्रतिरूपोऽयम्' इति प्रयोगदर्शनात् । तृतीयाध्यायगतसूत्रमुदाहरति— **अत एवेति** । यतश्चिदात्मनः स्वाभाविकमेकत्वं नानात्वं चौपाधिकं श्रुतिषु विवक्षितम्, अत एव तस्यौपाधिकनानात्वे जलादिषु प्रतिबिम्बितः सूर्यादिर्दृष्टान्तत्वेन श्रुतिषूपादीयत इति सूत्रार्थः । 'रूपं रूपम्—' इति श्रुतौ प्रतिरूपशब्दो न प्रतिबिम्बवाचकः, 'वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव' इत्यादौ व्यभिचारात् । अतः सूर्यादिप्रतिबिम्बदृष्टान्तस्वारस्यादेव चैतन्यप्रतिबिम्बो वक्तव्यः । तं प्रतिबिम्बं स्वयमेव सूत्रकृदाक्षिपति— **अम्बुवदिति** । सूत्रे दृष्टान्तभागस्यार्थमाह— **यथेति** । प्रतिबिम्बोदययोग्यत्वं स्वच्छत्वम् । उपाध्यन्तर्गतस्य न तत्र प्रतिबिम्ब इत्याशयेनाह— **तत इति** । बिम्बभूतसूर्यापेक्षयेत्यर्थः । दार्ष्टान्तिकभागं व्याचष्टे— **नैवमिति** । न तथात्वं चिदात्मनः प्रतिबिम्बितसूर्यादितुल्यत्वं नास्ति । कुतः, अग्रहणात्, अन्तःकरणादेरात्मप्रतिबिम्बोदययो-

सर्वगतस्यात्मनः प्रतिबिम्बोदययोग्यं किंचिदस्ति ततो विप्रकृष्टमिति प्रतिबिम्बासंभवमुक्त्वा 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' इति तदनन्तरसूत्रेण यथा जलप्रतिबिम्बितः सूर्यो जलवृद्धौ वर्धत इव जलह्रासे ह्रसतीव जलचलने चलतीवेति तस्याध्यासिकं जलानुरोधिवृद्धिह्रासादिभाक्त्वं तथात्मनोऽन्तःकरणा-

---

ग्यत्वेनाग्रहणात्। न ह्यन्तःकरणमात्मापेक्षया विप्रकृष्टदेशवत्, सर्वगतत्वादात्मनः। नापि तद्रूपवत्, अनङ्गीकारात्। चिदात्मनोऽपि सूर्यादिवद्बिम्बत्वयोग्यत्वेनाग्रहणाच्च, तस्य नीरूपद्रव्यत्वात्। तस्मात्प्रतिबिम्बितसूर्यचिदात्मनोर्दृष्टान्तदार्ष्टान्तिकभावानुपपत्तिरिति तुशब्दार्थः। दृष्टान्तदार्ष्टान्तिकयोः प्रतिबिम्बितत्वांशेन साम्याभावेऽपि न तद्भावविरोधोऽस्ति, विवक्षितांशेन साम्यस्य तत्रापि संभवात्। न हि तयोः सर्वसाम्यं क्वचिदपि संभवति, तथा सति दृष्टान्तदार्ष्टान्तिकभावोच्छेदप्रसङ्गादित्यभिप्रेत्य विवक्षितांशसाम्यं सूत्रकृद्दर्शयति— **वृद्धिह्रासेति**। तदनन्तरेत्यत्र तत्पदम् 'अम्बुवत्—' इति सूत्रपरम्। सूत्रं व्याचष्टे— **यथेति**। **आध्यासिकमिति**। भ्रान्तिसिद्धमित्यर्थः। **तथेति**। चिदात्मनो बुद्ध्याद्यवच्छिन्नतया बुद्ध्याद्युपाधावन्तर्भावाद्गजादिशरीरेऽन्तःकरणवृद्धौ चिदात्मा वर्धत इव, मशकादिशरीरेऽन्तःकरणह्रासे ह्रसतीव, तच्चलने चलतीव, तद्भेदे भिन्न

दिनावच्छेदेनोपाध्यन्तर्भावादाध्यात्मिकं तदनुरोधिवृद्धिह्रासादिभाक्त्वमित्येवं दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोध इति स्वयं सूत्रकृतैवावच्छेदपक्षे तयोस्तात्पर्यकथनात्, 'घटसंवृतमाकाशं नीयमाने घटे यथा ।

---

इव च भाति । तथा च श्रुतिः— 'ध्यायतीव लेलायतीव' इति । बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव तस्यां चलन्त्यामात्मा चलतीव, न तु स्वतो ध्यायति, चलति चेत्यर्थः । एवमध्यासमिद्धमन्तःकरणानुरोधिवृद्ध्यादिमत्त्वमात्मनोऽत्र विवक्षितं साम्यमित्यर्थः । तयोरिति । चैतन्यस्य प्रतिबिम्बितत्वगमकश्रुतितन्मूलकसूत्रयोः पूर्वमुदाहृतयोरित्यर्थः । अवच्छेदपक्षे न केवलं श्रुतिसूत्रविरोधाभाव एव, किं तु श्रुतिसूत्रानुग्रहोऽप्यस्तीत्याह— घटसंवृतमिति । घटसंवृतं घटावच्छिन्नमाकाशं प्रसिद्धमस्ति । तच्च घटे नीयमानेऽपि न नीयते । यथायं दृष्टान्तस्तद्वज्जीवो नभोपमो नभसा तुल्यः । एतदुक्तं भवति— जीवस्य नभोपमशब्देन घटसंवृताकाशतुल्यत्वमभिदधतावच्छिन्नचैतन्यरूपत्वमुक्तमिति । एवं प्रवेशश्रुतिरपि चिदात्मनो बुद्ध्याद्यवच्छेदकृतमेव द्रष्टृत्वादिधर्मलाभं दर्शयति, न प्रतिबिम्बभावकृतम् । तथा हि— 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' इत्युपक्रम्य 'प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनः' इति पुरुषविधब्राह्मणे श्रूयते । अयमर्थः— स सर्ववेदान्तेषु प्रसिद्धः, एष नामरूपव्याकर्तृत्वेन संनिहितः, इह

घटो नीयते नाकाशं तद्वज्जीवो नभोपमः ॥' 'अंशो

कार्यकरणसंघाते नखाग्रमवधीकृत्य प्रविष्टः । ननु यथा देवदत्तस्य गृहे सर्पस्य वा बिले प्रवेशः प्रसिद्धो न तथात्मनः प्रवेशः कल्पयितुं शक्येत, तस्य सर्वगतत्वात् । नापि जलपात्रेषु सूर्यादेरिव प्रतिबिम्बभावलक्षणः प्रवेशः संभवति, तस्य तैत्तिरीयकादौ प्रवेशवाक्यविचारावसरे भाष्यकारैरेव निरस्तत्वात् । अतः कीदृशः प्रवेशः प्रविष्टपदेन विवक्षित इति जिज्ञासायाम्, यथा जले प्रतिबिम्बभावेन प्रविष्टस्य सूर्यादेस्तद्धर्मवत्तयोपलभ्यमानत्वमस्त्येवमात्मनः संघातेऽधिष्ठानतया प्राक्सिद्धस्यैव प्राणबुद्ध्यादिधर्मवत्तयोपलभ्यमानत्वमेव प्रकृते प्रविष्टपदेन विवक्षितम्, न तु मुख्यः प्रवेश इति मन्वाना श्रुतिः स्वयमेव प्रविष्टपदं व्याचष्टे—प्राणन्नेवेत्यादिना । प्राणन्प्राणनचेष्टां प्राणोपाधिद्वारा कुर्वन् 'प्राणस्य प्राणम्' इत्यादिश्रुतौ द्वितीयप्राणपदवाच्यो भवति । वदन्वाग्वृत्तिमन्तःकरणतादात्म्यापत्त्या कुर्वन् 'वाचो ह वाचम्' इत्यादिश्रुतौ द्वितीयवाक्छब्दवाच्यो भवति । रूपं पश्यन्रूपगोचरचाक्षुषवृत्तिमन्तःकरणतादात्म्यापत्त्या कुर्वन् 'चक्षुषश्चक्षुः' इत्यादिश्रुतौ द्वितीयचक्षुःशब्दवाच्यो भवति । शृण्वञ्शब्दगोचरां श्रोत्रकरणिकां वृत्तिमन्तःकरणतादात्म्यापत्त्यैव कुर्वन् 'श्रोत्रस्य श्रोत्रम्' इत्यादिश्रुतौ द्वितीयश्रोत्रशब्दवाच्यो भवति । मन्वानो मननरूपां चक्षुरादिनिरपेक्षां वृत्तिं कुर्वन् 'मनसो मनः' इत्यादिश्रुतौ द्वितीयमनःशब्दवाच्यो भवति । चक्षुरादिव्यापारग्रहणं कार्यकरणसंघातव्यापारमात्रस्योपलक्षणम्, संघातधर्मा-

नानाव्यपदेशात्—' इति श्रुतिसूत्राभ्यामवच्छेदपक्ष-

णां सर्वेषामात्मन्युपलभ्यमानत्वात्। नन्वेवमप्यवच्छेदपक्षस्यद्वितीयाध्यायगतेन 'आभास एव च' इति सूत्रेण तद्भाष्येण च विरोधो दुर्वारः, तयोश्चैतन्यप्रतिबिम्बस्य स्पष्टमुक्तत्वात्। सूत्रार्थस्तु—आभास एव, जीवः परमात्मनः प्रतिबिम्ब एव, न निरुपाधिकः परमात्मैव जीवः। नापि न्यायमत इव परमात्मसकाशादत्यन्तभिन्नः, तत्त्वमस्याद्यभेदश्रुतिविरोधात्। प्रतिबिम्बस्य च वस्तुतो बिम्बाभिन्नत्वेनाभासत्वपक्ष उक्तश्रुतिविरोधाभावादिति च-शब्दार्थ इति; इति चेत्, न। उदाहृतसूत्रतद्भाष्ययोरुक्तप्रतिबिम्बपक्षस्य 'भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्' इति सूत्रोक्तसिद्धान्तवन्मतान्तरत्वोपपत्तेः। न च तथा कल्पने किं विनिगमकमिति वाच्यम्। तृतीयाध्याये स्वयं सूत्रकृतैव न्यायपूर्वकं कृतस्य चैतन्यप्रतिविम्बनिरासस्य नियामकत्वात्, आभाससूत्रे च जीवस्य प्रतिबिम्बत्व उपपत्त्यादेरनुपन्यासाच्च। भोक्त्रापत्तिसूत्रस्यायमर्थः— 'सर्वं खल्विदं ब्रह्म' इति श्रुत्या प्रपञ्चस्य ब्रह्माभेदः प्रतिपाद्यते। 'अहं ब्रह्मास्मि' इति श्रुत्याहंशब्दार्थभूतभोक्तृवर्गस्य च ब्रह्माभेदः प्रतिपाद्यते। तथा च श्रुतिद्वयानुसारेण भोक्तृभोग्यप्रपञ्चयोरेकब्रह्माभेदस्वीकारे भोग्यप्रपञ्चस्य भोक्त्रापत्तेर्भोक्त्रभेदापत्ते, एवं भोक्तुरपि भोग्याभेदापत्तेरेकब्रह्माभिन्नयोस्तयोः परस्परमप्यभेदावश्यंभावात्। न चेष्टापत्तिः, तथा सत्यविभागः प्रसज्येत, भोक्तृभोग्ययोर्विभागबोधकप्रत्यक्षादिवि-

स्यैव परिग्रहाच्च । तस्मात्सर्वगतस्य चैतन्यस्यान्तः-

रोधः प्रसज्येतेति चेत्, उच्यते— श्रुतिसिद्धं भोक्तृभोग्ययोरेक-ब्रह्माभिन्नत्वं तयोः प्रत्यक्षादिसिद्धं परस्परं विभक्तत्व चेत्युभय लोकवत्स्यादुपपद्यते। यथा लोक एकसमुद्रविकाराणां फेनबुद्बुद-तरङ्गाणामेकसमुद्राभिन्नत्व परिणामानां परिणाम्यभेदस्यानुभव-सिद्धत्वात्, तेषामेव फेनादीनां परस्परं भिन्नत्व चास्ति भेदस्या-नुभवसिद्धत्वात्; एवमेकब्रह्मपरिणामयोर्भोक्तृभोग्ययोरेकब्रह्माभि-न्नत्वं परस्परं भिन्नत्व चोपपद्यत इति नाद्वैतश्रुतीना प्रत्यक्षादिविरो-धप्रसक्तिरिति । अय च विरोधपरिहारो न सिद्धान्तसमतः कूटस्थनित्यस्य ब्रह्मणः परिणामित्वानभ्युपगमात्, किं तु मता-न्तराभिप्रायेणेति भाष्यादिषु घण्टाघोषः । तथा प्रकृतेऽपीति संक्षेप । अंश इति । जीव ईश्वरस्यांशः । कुत, नानाव्यपदेशात् 'य आत्मानमन्तरो यमयति' इत्यादिश्रु-तिषु नियम्यनियामकभावादिना जीवेश्वरयोर्नानात्वस्य भेदस्य व्यपदेशादिति सूत्रभागस्याक्षरार्थः । अत्रांशत्वं जीवचैत-न्यस्य घटाकाशवदन्तःकरणावच्छिन्नत्वरूपं विवक्षितम्, न तु मुख्यमंशत्वम्, निरवयवस्य ब्रह्मणो मुख्यांशासंभवादिति तदधि-करणभाष्ये स्फुटमिति भावः। अवच्छेदपक्षसमर्थनमुपसंहरति— तस्मादिति । प्रतिबिम्बासंभवादवच्छेदपक्षे विरोधाभावात्साधकस-त्त्वाच्चेत्यर्थ. । अवच्छेद्यचैतन्यस्य प्रतिबिम्बपक्षेऽपि समततयोभय-संप्रतिपन्नस्य तस्यैव जीवत्वादिकल्पनं युक्त लाघवादित्याशयेनाह

करणादिनावच्छेदोऽवश्यंभावीत्यावश्यकत्वादवच्छिन्नो जीव इति पक्षं रोचयन्ते ॥

---

—अवच्छेदोऽवश्यंभावीति । अवच्छिन्न इति । अन्तःकरणावच्छिन्नो जीव । जीवग्रहणमुपलक्षणम् । अविद्यावच्छिन्न ईश्वरः, 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति श्रुतेः । 'जीवेशावाभासेन करोति, माया चाविद्या च स्वयमेव भवति' इति श्रुतौ चाभासपदमवच्छिन्नपरम्, प्रतिबिम्बासम्भवस्योक्तत्वात् । मायापदं च प्रथमोपात्तजीवोपाधिभूतान्तःकरणपरम्, 'कार्योपाधिरयं जीवः' इति श्रुतेः । एवं मायापदोपात्तान्तःकरणस्य च मूलप्रकृत्यात्मकत्वं प्रकृतिविकारभावप्रयुक्तम् । पूर्वमनवच्छिन्नस्येश्वरत्वोक्तिस्तृप्तिदीपवचनानुसारेण, अभावावच्छिन्नस्येश्वरत्वोक्तिश्च सम्भवमात्रेण । न तु तात्पर्यतः, 'कारणोपाधिरीश्वरः' इति श्रुतिविरोधात् । अनवच्छिन्नस्येश्वरत्वपक्षे तस्योपाध्यभावेन सर्वज्ञानकर्तृत्वादेरसम्भवाच्च । अभावस्येश्वरोपाधित्वपक्षेऽपि समानोऽयं दोषः, मायाविद्याव्याकृतशक्त्यक्षराकाशादिशब्दितभावरूपोपाधेरिव तस्य सर्वज्ञत्वादिप्रयोजकत्वायोगात् । अत एव वाक्यवृत्तौ भगवत्पादैरपि सर्वज्ञत्वादिप्रयोजकोपाधित्वमविद्याया दर्शितम्— 'मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः' इतीति भावः ॥

'अथ क ईश्वरः कश्च जीवः' इति प्रश्ने प्रतिवचनत्वेन

**अपरे तु— न प्रतिबिम्बो नाप्यवच्छिन्नो जीवः। किं तु कौन्तेयस्यैव राधेयत्ववदविकृतस्यैव ब्रह्मणोऽविद्यया जीवभावः, व्याधकुलसंवर्धितराजकुमारदृष्टान्तेन 'ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यते' इति बृहदारण्यकभाष्ये प्रतिपादनात्। 'राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते। यथैवमात्मनोऽज्ञस्य तत्त्व-**

---

मतान्तरमुत्थापयति— **अपरे** त्विति। कस्तर्हि जीव इति पृच्छति— **किं** त्विति। दृष्टान्तपूर्वकं ब्रह्मैव जीव इत्युत्तरमाह— **कौन्तेयस्यैवे**ति। कुन्तीकुमारस्यैव। न तु तत्प्रतिबिम्बादेरित्येवकारार्थः। राधाया अपत्यं राधेयः, तस्य भावस्तत्त्वम्, तद्वदित्यर्थ। कि त्वविकृतस्यैवेति संबन्धः। अवच्छेदप्रतिबिम्बभावरहितस्येत्यर्थ। अत्र भाष्यवार्त्तिकसंमति हेतुत्वेन दर्शयति— **व्याधेत्यादिना**। यथा राजकुले जातः कर्णो जन्मप्रभृति व्याधकुल एव संवर्धितस्तज्जातीयैः सहवासादिजनितभ्रान्तिलक्षणाविद्यया स्वात्मानं राधेय मन्यते न तु स्वतः सिद्धमपि कौन्तेयत्वमनुभवति, ततश्च कौन्तेयत्वप्रयुक्ताच्छ्रेयसः सकाशात्प्रच्युत. सर्वत्र नानाविधशापावमानादिलक्षणं बहुविधदुःख प्राप्तवान्, स च कदाचिद्भगवता विवस्वता 'हे कर्ण, कौन्तेयोऽसि त्वम्, न राधेयः' इत्युपदेशं कुर्वता स्मारितनिजरूपः सन् तया स्मृत्या व्याधत्वराधेयत्वादेरविद्याकृतस्य निवृत्तौ सत्या

**मस्यादिवाक्यतः ॥' इति वार्त्तिकोक्तेश्च । एवं च स्वाविद्यया जीवभावमापन्नस्यैव ब्रह्मणः सर्वप्रपञ्चकल्पकत्वादीश्वरोऽपि सह सर्वज्ञत्वादिधर्मैः स्वप्नोपलब्धदेवतावज्जीवकल्पित इत्याचक्षते ॥**

---

व्याधत्वराधेयत्वकृत नानाविधदुःखं त्यक्त्वा कौन्तेयत्वस्मृतिप्रयुक्त श्रेयः प्राप्तवान्; तथा ब्रह्माप्यनादिसिद्धया स्वाविद्ययावृतनिजरूप सज्जीवभावं प्राप्य स्वत सिद्धान्नित्यनिरतिशयानन्दस्वरूपानुभावात्प्रच्युत भवति ततश्च ससरति, एव संसरद्ब्रह्म कदाचित्स्वप्नदशायामिव स्वाविद्याकल्पितेन गुरुणा शास्त्रेण चोत्पादितया स्वगोचरविद्यया जीवभावादिप्रयोजकाविद्यानिवृत्तौ मुच्यते नित्यसिद्धनिरतिशयानन्दमनुभवति स्वरूपचैनन्येनैवेति भाष्यार्थः । **अज्ञस्येति** । अज्ञानावृतनिजस्वरूपस्येत्यर्थः । **तत्त्वमस्यादी**ति । गुरूपदिष्टतत्त्वमस्यादिवाक्यजन्यज्ञानेनाज्ञाननिवृत्तौ जीवभाव आत्मनो निवर्तत इत्यर्थ । एव जीव निरूप्येश्वरं निरूपयति— **एवं चेति** । भाष्यवार्त्तिकपर्यालोचनया प्रतिबिम्बभावादिरहितस्य पूर्णब्रह्मण एव जीवत्वे सिद्धे सतीत्यर्थः । ईश्वरोऽपि सर्वज्ञत्वादिधर्मैं सह जीवकल्पित इति संबन्ध. । यथोक्तजीवस्येश्वरकल्पकत्वे हेतुमाह— **स्वाविद्ययेत्यादिना** । अन्यस्य कल्पकस्याभावादितितात्पर्यकमवधारणम । जीवस्येश्वरकल्पकत्वे दृष्टान्तमाह— **स्वप्ने**ति । यथा स्वप्ने स्वप्नद्रष्टा जीव एव परां देवतां सर्वज्ञत्वादिधर्मैः सहितां कल्पयति, कल्पयित्वा च तामहर्निशमु

**अथायं जीव एक उतानेकः। अत्रानुपदोक्तपक्षाव-लम्बनाः केचिज्जीवैक्यमाश्रित्याहुः— एको जीवः। तेन चैकमेव शरीरं सजीवमन्यानि स्वप्नदृष्टशरीराणीव निर्जीवानि। तदज्ञानकल्पितं सर्वं जगत्। तस्य स्व-**

---

पास्ते तदुपासनया चाभ्युदयानि श्रेयसलक्षणं लभते, एव जागरणेऽपीति दृष्टान्तादेरभिप्राय. ॥

जीवेश्वरनिरूपणप्रसङ्गेन विचारान्तरमारभते— **अथेति। अ-नुपदोक्तेति।** 'ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यते' इत्यादिग्रन्थोक्तेत्यर्थः। **एक इति।** ब्रह्मण एकत्वात्तत्र चाव-च्छेदप्रतिबिम्बभावयोरनङ्गीकाराच्चेत्यर्थः। ननु जीवैक्ये तेनै-कमेव शरीरं सजीवं स्यान्न सर्वशरीराणीत्याशङ्कामिष्टापत्त्या परिहरति— **तेन चेति।** ननु यथैकशरीरे हिताहितप्राप्ति परिहारार्था स्पन्दनरूपा चेष्टा दृश्यते तथा सर्वशरीरेषु दृश्यते। तथा च कथमेकमेव शरीरं सजीवम्, तत्राह— **अन्यानीति।** स्वप्नदशायां स्वप्नद्रष्टुः शरीरमेकमेव सजीवम्। स्वप्नद्रष्ट्रा दृष्टान्यन्यानि शरीराणि तु चेष्टाविशेषवत्तया दृश्य-मानान्यपि सजीवानि न भवन्ति। तथा जागरणेऽपीति द्रष्टव्यम्। ननु स्वाप्नस्य जगतः कल्पिका तावन्निद्रान्व-यव्यतिरेकसिद्धा यथा वर्तते न तथा जाग्रत्प्रपञ्चस्य कल्पकम-न्वयव्यतिरेकसिद्धं किंचिदस्तीति जगत्सत्यमेव स्यात्, नेत्याह— **तदज्ञानेति।** जीवाज्ञानेत्यर्थः। अज्ञानस्य जगत्कल्पकत्वं शास्त्र-

**प्नदर्शनवद्यावदविद्यं सर्वो व्यवहारः । बद्धमुक्तव्यवस्थापि नास्ति, जीवस्यैकत्वात् । शुकमुक्त्यादिकमपि स्वाप्नपुरुषान्तरमुक्त्यादिकमिव कल्पितम् । अत्र च संभावितसकलशङ्कापङ्कप्रक्षालनं स्वप्नदृष्टान्तसलिलधारयैव कर्तव्यमिति ॥**

---

सिद्धमिति भावः । ननु सर्वव्यवहारस्य स्वप्नव्यवहारवत्कल्पितत्वे तद्वदेव सहसा व्यवहारलोपः प्रसज्येत, तथा च विद्यानर्थक्यमिति, नेत्याह— **तस्येति** । जीवस्येत्यर्थः । यावन्निद्राक्षय स्वप्नव्यवहारानुवृत्तिवद्विद्यया यावदविद्यानिवृत्ति सर्वव्यवहारानुवृत्तिर्युज्यत इति न विद्यावैफल्यम्, अविद्यानिवृत्त्यर्थमपेक्षितत्वादिति भावः । ननु जीवैकत्वमते एको जीवो बद्धोऽन्यो जीवो मुक्त इति व्यवस्था शुकादिमुक्तिप्रतिपादकशास्त्रसिद्धा न स्यादित्याशङ्कय, इष्टापत्तिरित्याह— **बद्धेति** । **शुकेति** । यथा स्वप्नादुत्थित स्वप्नभ्रान्तिसिद्धां पुरुषान्तरमुक्तिं परं प्रति बोधयति, तथा जीवभ्रान्तिसिद्धा शुकादिमुक्ति तं प्रत्येव बोधयति श्रवणादिषु प्रवृत्त्युपयोगितयेति भावः । ननु जीवैक्यमते विद्योपदेष्टुरन्यस्याभावाद्विद्योदयो न स्यात्, जीवेश्वराविभागाभावेन जीवस्येश्वरोपासनादिव्यवहारश्च न स्यादित्याशङ्क्याह— **अत्र चेति** । यथा स्वप्नदशायां स्वप्नदृक्चिद्गुरुमीश्वर च कल्पयित्वा तावुपास्ते ताभ्या च विद्यादिक लभते तद्वदिति भावः ॥

**अन्ये त्वस्मिन्नेकशरीरैकजीववादे मनःप्रत्ययमलभमानाः 'अधिकं तु भेदनिर्देशात्' 'लोकवत्तु लीलाकैवल्यम्' इत्यादिसूत्रैर्जीवाधिक ईश्वर एव जगतः स्रष्टा,**

---

एकजीववाद एव मतान्तरमाह— **अन्ये त्विति। एकशरीरेति।** एकमेव शरीरं सजीवं यस्मिन्नेकजीववादे स तथोक्तः। **मनःप्रत्ययमिति।** मनसा विश्वासं प्रामाणिकत्वनिश्चयमित्यर्थः, एकमेव शरीरं सजीवं शरीरान्तराणि निर्जीवानीत्यत्र विनिगमकाभावात्। न च जीवैक्यं विनिगमकमिति वाच्यम्, एकोऽपि जीवोऽस्मिञ्शरीरे वर्तत इत्यत्र विनिगमकस्य वक्तुमशक्यत्वादिति भावः। **अधिकं त्विति।** जीवाभिन्न ईश्वरे वेदान्तानां प्रथमाध्याये निरूपितः समन्वयो न घटते, तथा सतीश्वरगतजगत्स्रष्टृत्वादेर्जीवधर्मत्वप्रसङ्गात्; तथा चानुभवविरोध इति पूर्वपक्षनिरासार्थस्तुशब्दः। अधिकं जीवादुपाधितो भिन्नं ब्रह्म जगत्स्रष्टृत्वसर्वज्ञत्वादिगुणकमभ्युपगम्यते। अतो न ब्रह्मधर्माणां जीवे प्रसक्तिः, औपाधिकभेदस्यापि धर्मव्यवस्थापकतायाः लोकसिद्धत्वात्। कल्पितभेदाङ्गीकारे हेतुमाह— **भेदनिर्देशादिति।** 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इत्यादौ नियम्यनियामकभावादिना भेदनिर्देशादिति सूत्रार्थः। 'लोकवत्—' इति सूत्रं पूर्वमेव व्याख्यातम्। अत्रादिपदेन 'अनुपपत्तेस्तु न शारीरः' इत्यादिसूत्रं गृह्यते। मनोमयत्वादिगुणको न शारीरः, तस्मिन्सर्वकर्मत्वादीनामनुपपत्तेरेवेति सूत्रार्थः।

तस्याप्तकामत्वेन प्रयोजनाभावेऽपि केवलं लीला जगतः सृष्टिरित्यादि प्रतिपादयद्भिर्विरोधं च मन्यमानाः—हिरण्यगर्भ एको ब्रह्मप्रतिबिम्बो मुख्यो जीवः । अन्ये तु तत्प्रतिबिम्बभूताश्चित्रपटलिखितमनुष्यदेहार्पितपटाभासकल्पा जीवाभासाः संसारादिभाज इति सविशेषानेकशरीरैकजीववादमातिष्ठन्ते ॥

---

**विरोधं चेति** । मनःप्रत्ययमलभमाना विरोध च मन्यमाना इति चशब्दार्थः । जीवातिरिक्तेश्वराभाववादेऽस्मिञ्जगत्सृष्ट्यादिसमर्थस्य व्यावहारिकभेदवत ईश्वरस्यास्तित्वजगत्स्रष्टृत्वसर्वात्मकत्वादिगुणप्रतिपादकै सूत्रैर्विरोधमित्यर्थः । **ब्रह्मप्रतिबिम्ब इति** । अनेन बिम्बभूतं ब्रह्म जीवादधिकमीश्वररूपमस्मिन्मतेऽस्ति, अतो नोदाहृतसूत्रविरोध इति सूचितम् । **तदिति** । ब्रह्मप्रतिबिम्बभूतहिरण्यगर्भस्य भौतिकजगत्स्रष्टृतया कारणोपाधितया च मुख्यजीवस्य प्रतिबिम्बभूता अन्ये जीवा जीवाभासा , तद्वत्सृष्ट्यादिसामर्थ्याभावादित्यर्थः । **कल्पा इति** । तुल्या इत्यर्थः । **संसारादिभाज इति** । अनेन यथा हिरण्यगर्भशरीरं मुख्यजीवेन सजीवं तथेतराण्यपि शरीराणि जीवाभासैः सजीवानीति पूर्वमताद्विशेष सूचितः । अत्रादिपदं मुक्तिसंग्रहार्थम् । जीवाभासानां मुक्तिश्च स्वबिम्बभूतहिरण्यगर्भप्राप्तिः क्रमेण च शुद्धब्रह्मप्राप्तिरिति मन्तव्यम् । **सविशेषेति** । सविशेषाणि सजीवान्यनेकशरीराणि यस्मिन्नेकजीववादे स तथा । आतिष्ठन्ते, अङ्गीकुर्वन्तीत्यर्थः ॥

**अपरे तु हिरण्यगर्भस्य प्रतिकल्पं भेदेन कस्य हिरण्यगर्भस्य मुख्यजीवत्वमित्यत्र नियामकं नास्तीति मन्यमानाः— एक एव जीवोऽविशेषेण सर्वं शरीरमधितिष्ठति। न चैवं शरीरावयवभेद इव शरीरभेदेऽपि प-**

---

अत्राप्यस्वरसं वदन्नेकजीववादमेवाह— **अपरे त्विति।** **एक एवेति।** अविद्याया ब्रह्मप्रतिबिम्बरूपो जीवस्तावदेक., अविद्याया एकत्वात्। स एव च सर्वं शरीरं स्वभोगाद्यर्थमधितिष्ठति, न त्वविद्यायां ब्रह्मप्रतिबिम्बो हिरण्यगर्भशरीरमधितिष्ठत्यन्यानि तु शरीराणि तत्प्रतिबिम्बा जीवाभासा अधितिष्ठन्ति। कुत, इतरजीवाना तत्प्रतिबिम्बत्वे मानाभावादित्येवकारार्थ। **अविशेषेणेति।** मुख्यामुख्यविभागं विनेत्यर्थ.। जीवभेदे हि सति कश्चिन्मुख्यो जीव. कश्चिच्चामुख्यो जीवाभास इति विभाग संभवेत्। न त्वेतदस्ति, तस्यैकत्वाभ्युपगमादिति भाव.। ननु देवदत्तस्य शिरःपाणिपादमधितिष्ठत एकस्य यथा 'शिरसि मे वेदना' 'पादे मे सुखम्' इत्याद्यनुसधानं दृश्यते, एवमेकस्यैव जीवस्य सर्वशरीराधिष्ठातृत्वे 'मम देवदत्तनामकशरीरे सुखम्, यज्ञदत्तनामकशरीरे दुःखम्' इत्यादिरूपेण सर्वस्य सर्वत्रानुसंधानप्रसङ्ग इति शङ्कते— **न चैवमिति।** शरीरभेदस्याननुसंधानप्रयोजकत्वाभ्युपगमान्नोक्तातिप्रसङ्ग.। न च तत्र मानाभावः शङ्कनीयः, जीवस्यातीतशरीरेषु वर्तमानशरीरे चैकत्वेऽपि जन्मान्तरीयसुखाद्यनुसंधानादर्शनेन तद्भेदस्य तत्प्रयोज-

नादर्शनेन शरीरभेदस्य तदननुसंधानप्रयोजकत्वक्लृप्तेः । योगिनस्तु कायव्यूहसुखाद्यनुसंधानं व्यवहितार्थग्रहणवद्योगप्रभावनिबन्धनमिति न तदुदाहरणमित्यविशेषानेकशरीरैकजीववादं रोचयन्ते ॥

इतरे त्वत्रापि बन्धमुक्तिव्यवस्थाभावस्य तुल्यत्वेन

---

कनाया संप्रतिपन्नत्वादिति परिहरति— **जन्मान्तरेति** । ननु योगिना देहभेदे सत्यप्यनुसंधानदर्शनाद्व्यभिचार इत्यत आह— **योगिनस्त्विति** । अस्मदादिवैलक्षण्यार्थकस्तुशब्दः । तद्दर्शयति— **कायेति** । न ह्यस्मदादीनां व्यवहितार्थसाक्षात्कारोऽस्ति, तत्प्रयोजकादृष्टविशेषाभावात् । तथा च शरीरभेदमात्रं न तत्प्रयोजकम्, किं त्वदृष्टविशेषासहकृतशरीरभेदोऽननुसंधानप्रयोजक इति न योग्यनुसंधानस्थले व्यभिचार इति भावः । योगपदं योगजादृष्टपरम् । **अविशेषेति** । अविशेषेणाधिष्ठितान्यनेकशरीराणि यस्मिन्नेकजीववादे स तथेत्यर्थः ॥

अनेकजीववादमुत्थापयति— **इतरे त्विति** । **अत्रापीति** । अव्यवहितमतेऽपीत्यर्थः । यद्येकजीववादे व्यवस्था न सिध्यति ततः को दोष इत्याशङ्क्य श्रुतिस्मृतिभाष्याणामनाञ्जस्यं दोष इत्याह—**तद्यो य इति** । देवानां मध्ये यो यो देवस्तद्ब्रह्म प्रत्यबुध्यत साक्षात्कृतवान्स एव तद्ब्रह्माभवन्नान्यो ब्रह्मबोधरहित इति विदुषो मुक्तत्वमविदुषो बद्धत्वं च प्रतिपादयन्त्या श्रुत्या बन्धमुक्ति-

'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' इत्यादिश्रुतेः 'प्रतिषेधादिति चेन्न शारीरात्' इत्यधिकरणे ब्रह्मविदः मुक्तत्वप्रतिपादकभाष्यस्य चानाञ्जस्यमित्यपरितुष्यन्तोऽन्तःकरणानां जीवोपाधित्वाभ्युपगमेनानेकजीव-

---

व्यवस्था दर्शिता। आदिपदेन 'अजामेकाम्—' इति श्रुतिर्बन्धमुक्तिव्यवस्थाप्रतिपादकत्वेन भाष्यकारादिभिरङ्गीकृता गृह्यते। श्रुतिग्रहणम् 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इत्यादिस्मृतीनामुपलक्षणम्। **प्रतिषेधादिति।** इदं पूर्वपक्षसूत्रम्। बृहदारण्यके काण्वशाखायाम् 'न तस्य प्राणा उत्क्रामन्ति' इति वाक्येन परब्रह्मतत्त्वविदः प्राणोत्क्रान्तिप्रतिषेधात्तस्य गत्युत्क्रान्ती न स्तः, उत्क्रान्तिपूर्वकत्वाद्गतेरिति चेदिति सिद्धान्तिशङ्काभागार्थः। पूर्वपक्षी तां दूषयति—**न शारीरादिति।** बृहदारण्यक एव माध्यंदिनशाखाया समानप्रकरणे ब्रह्मविदं शारीरं प्रकृत्य 'न तस्मात्प्राणा उत्क्रामन्ति' इति वाक्यं पठ्यते। अत्र तच्छब्देन प्रकृतः शारीरो गृह्यते न शरीरम्, तस्य शरीरापेक्षया प्रधानत्वात्। तथा च 'न तस्मात्—' इति वाक्येन शारीराज्जीवात्प्राणानामुत्क्रमणं निषिध्यते, न शरीरात्। अतः शरीरादुत्क्रमणं विदुषोऽप्यस्तीति तस्यापि गत्युत्क्रान्ती स्त एव। 'न तस्य प्राणाः—' इति काण्ववाक्यस्यापि, तस्य विदुषः प्राणाः शरीरान्नोत्क्रामन्ति, किं तु तेन सहैव ब्रह्मलोकं गच्छन्तीत्यर्थो बोध्यः। **अनाञ्ज-**

वादमाश्रित्य बन्धमुक्तिव्यवस्थां प्रतिपद्यन्ते ॥

तेषु केचिदेवमाहुः— यद्यपि शुद्धब्रह्माश्रयविषयक-

---

स्यमिति । आञ्जस्याभाव उपपन्नत्वाभाव इत्यर्थः । अन्तःकरणा-नामिति । न च नानाजीववादेऽपि 'ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यते' इति बृहदारण्यकभाष्यप्रतिपादनेन विरोधस्तु-ल्य इति वाच्यम् । तद्भाष्यप्रतिपादनस्य ब्रह्मैव स्वाविद्यया नाना-न्तःकरणरूपेण परिणतया नानाजीवभावं प्राप्य संसरति स्वविद्यया क्रमेण मुच्यत इत्यभिप्रायकत्वोपपत्तेः । श्रुतिस्मृत्युपो-द्बलितशुकादिमुक्तिप्रतिपादकभाष्यस्य 'ब्रह्मैव स्वाविद्यया संस-रति' इति भाष्यमात्रस्वारस्यमनुसृत्यान्यथानयनायोगात् । न चोदाहृतश्रुतिस्मृतिभाष्याणां ब्रह्मात्मैकत्वपरत्वेन नानाजीववादे ता-त्पर्याभावात्तेभ्यो जीवनानात्वं न सिध्यतीति वाच्यम् । एकजीव-वादेऽपि तात्पर्याभावस्य तुल्यत्वात् । न च जीवत्वोपाधिभूताया अविद्याया एकत्वाज्जीवैक्यसिद्धिरिति वाच्यम् । उदाहृतश्रुतिस्मृ-तिभाष्यानुरोधेनाविद्यानानात्वाभ्युपगमसंभवात्तदेकत्वश्रुत्यादीनां जात्यभिप्रायकत्वोपपत्तेः, अविद्याया एकत्वेऽपि 'कार्योपाधिरयं जीवः' इति श्रुत्यनुसारेणान्तःकरणानामेव जीवत्वोपाधित्वोप-गमसंभवाच्चेति भावः ॥

नानाजीववादे मतभेदेन बन्धमुक्तिव्यवस्थामुपपादयितुमार-भते— तेष्विति । नानाजीववादिषु मध्य इत्यर्थः । केचिदिति ।

मेवाज्ञानं तन्नाश एव च मोक्षः, तथापि जीवन्मुक्ता-
वज्ञानलेशानुवृत्त्यभ्युपगमेनाज्ञानस्य सांशत्वात्तदेव क-

---

ननु नानाजीववादेऽपि जीवस्यान्तःकरणोपाधिकत्वपक्षे मूलाज्ञा-
नस्यैकत्वेन शुकादितत्त्वज्ञानेनैव तस्य निवृत्तत्वादिदानीं संसारा-
नुपलब्धिप्रसङ्ग इत्याशयेन शङ्कते— **यद्यपीति । शुद्धब्रह्माश्र-
येति ।** जीवेश्वरयोर्विशिष्टरूपयोरज्ञानाश्रयत्वं न संभवति, तयोः
कल्पितत्वात् । तथा च शुद्धस्यैवावृतत्वरूपं विषयत्वम् ; न त्वी-
श्वरस्यापि, तस्य जीवान्तरवदौपाधिकभेदादेवानुपलब्धिसिद्धौ
जीवान्प्रतीश्वरस्याज्ञानावृतत्वरूपविषयत्वकल्पनस्य व्यर्थत्वादिति
भावः । **एकमेवेति ।** 'अजामेकाम्' 'माया तु प्रकृतिं विद्यात्'
'विभेदजनकेऽज्ञाने' इति श्रुतिस्मृतिष्वेकवचनश्रवणेन लाघवेन
च तस्यैकत्वावगमादिति भावः । **तन्नाश एव चेति ।** 'भूय-
श्चान्ते विश्वमायानिवृत्तिः' 'अज्ञाने नाशमात्यन्तिकं गते' इत्या-
दिश्रुतिस्मृतिषु सर्वानर्थमूलाज्ञाननिवृत्तेर्मोक्षत्वावगमादिति भावः ।
एकस्य तत्त्वज्ञानेन कृत्स्नाज्ञाननाशो नाङ्गीक्रियते, येन व्यवस्था
न स्यात् । किं तु तस्य तस्य ज्ञानेन तत्तदन्तःकरणादिपरिणा-
मिनो मूलाज्ञानांशस्यैव नाश उपेयते । न च तस्य सांशत्वे
मानाभाव इति वाच्यम् । जीवन्मुक्तावावरणशक्तिमदंशस्य
नाशेऽपि विक्षेपशक्तिमदज्ञानांशस्य ज्ञानादनिवृत्तस्य यावद्विदेहकै-
वल्यमनुवृत्त्यभ्युपगमेन तस्य सांशत्वावगमात् । तथा चाज्ञानस्या-
निर्वचनीयस्यानिर्वचनीयानामेव भागरूपांशानामनन्तानां संभ-

चिदुपाधौ ब्रह्मावगमोत्पत्तावंशेन निवर्तत उपाध्यन्तरेषु यथापूर्वमंशान्तरैरनुवर्तत इति ॥

अन्ये तु— यथा न्यायैकदेशिमते भूतले घटात्य-

---

वाभावमादाय बन्धमुक्तिव्यवस्था सूपपादेति परिहरति— तथा-पीत्यादिना ॥

अज्ञानसत्त्वं बन्धस्तन्नाशो मोक्ष इति मतमुक्तम् । इदानीं चैतन्यस्याज्ञानसंबन्धो बन्धस्तदसंबन्धो मोक्षो न तु तन्निवृत्तिः, असंबन्धमात्रेणैव बन्धनिवृत्तिसिद्धेर्ज्ञानादज्ञाननिवृत्तिप्रतिपादकशास्त्रस्यापि तदसंबन्ध एव तात्पर्योपपत्तेः; अन्यथा मूलाज्ञानस्य विरोधिज्ञानोदये सति, तूलपिण्डस्य विरोध्यग्निसंसर्ग इवावशेषासंभवेन बन्धमुक्तिव्यवस्थाशास्त्रस्य जीवन्मुक्तिशास्त्रस्य च निरालम्बनत्वप्रसङ्गादिति मन्यमानाना मतमाह— अन्ये त्विति । 'भूतले घटो न' इत्यनुभवसिद्धो घटाभावस्त्रैकालिकत्वाभ्युपगमाद्घटानयनानन्तर तदधिकरणे भूतले वर्तत एव । तथा च घटवत्यपि भूतले 'घटो नास्ति' इति प्रतीतिः प्रमा स्यादिति दोषप्रसक्तौ, तत्परिहाराय नैयायिका. कल्पयन्ति–घटाधिकरणे तदत्यन्ताभावस्य संबन्धाभावेन तत्र तत्प्रतीतेर्भ्रान्तित्वोपपत्तिः । न च घटसंयोगोत्पत्तेः पूर्वं भूतले संबन्धवतस्तस्य घटसंयोगकाले कथमवृत्तिरूपः संबन्धाभाव इति वाच्यम् । प्रतीत्यनुसारेण भूतलादौ घटात्यन्ताभाववृत्तौ घटसंयोगस्य प्रागभावप्रध्वंसाभावयोरन्यतराभावो नियामक

न्ताभावस्य वृत्तौ घटसंयोगाभावो नियामक इत्यनेकेषु-प्रदेशेषु तद्वत्सु संसृज्य वर्तमानो घटात्यन्ताभावः क्वचित्प्रदेशे घटसंयोगोत्पत्त्या तदभावनिवृत्तौ न संसृज्यते, एवमज्ञानस्य चैतन्ये वृत्तौ मनो नियामकमिति तदुपाधिना चैतन्यप्रदेशेषु संसृज्य वर्तमानमज्ञानं क्वचिद्ब्रह्मदर्शनोत्पत्त्या 'भिद्यते हृदयग्रन्थिः—' इति श्रुत्युक्तरीत्या मनसो निवृत्तौ न संसृज्यते; अन्यत्र यथापूर्वमवतिष्ठत इत्यज्ञानसंसर्गासंसर्गावेव बन्धमोक्षावित्याहुः ॥

---

इति कल्पनेन घटसंयोगाधिकरणभूतले घटाभावस्यासंबन्धोपपत्तेरिति । तदेतन्मतं दृष्टान्तीकरोति— यथा न्यायैकदेशिमत इति । तद्वत्स्विति । घटसयोगाभाववत्स्वित्यर्थ. । तदुपाधिनेति । मन एवोपाधिस्तेनेत्यर्थ. । क्वचिदिति । चैतन्यप्रदेश इत्यर्थः । ब्रह्मदर्शनोत्पत्त्या मनसो निवृत्ताविति संबन्धः । ब्रह्मदर्शनं मनसो निवर्तकमित्यत्र मानमाह— भिद्यत इति । हृदयग्रन्थिरित्यत्र हृदयपदमन्तःकरणपरम् । तच्चान्तःकरणं चिदात्मन्यध्यस्ततया तत्तादात्म्यापन्नं सद्ग्रन्थिरिव ग्रन्थिः । स च ब्रह्मदर्शने जाते ब्रह्मण्येव विलीयत इति श्रुत्यर्थः । अन्यत्रेति । चैतन्यप्रदेशान्तरेष्वित्यर्थः ॥

**अपरे तु— नाज्ञानं शुद्धचैतन्याश्रयम्, किं तु जीवाश्रयं ब्रह्मविषयम्। तच्चान्तःकरणप्रतिबिम्बरूपेषु सर्वेषु जीवेषु व्यक्तिषु जातिवत्प्रत्येकं पर्यवसिततया वर्त-**

---

**नाज्ञानमिति।** शुद्धचैतन्यस्य वेदान्तशास्त्रप्रतिपाद्यस्य नाज्ञानाश्रयत्वम्, तस्य 'वेदान्तवेद्यं वस्तु न जानामि' इत्यज्ञानविषयत्वेनैवानुभवादिति भावः। **जीवाश्रयमिति।** 'न जानामि' इत्यज्ञानाश्रयत्वेन जीवस्यैवानुभवात्। न चाज्ञानस्य स्वकार्यान्तःकरणविशिष्टचैतन्यरूपजीवाश्रितत्वमनुपपन्नमिति वाच्यम्। अन्तःकरणे यत्प्रतिबिम्बभूतं चैतन्यं तस्यैव जीवत्वाभ्युपगमेन विशिष्टस्य जीवत्वानुपगमात्। न चान्तःकरणस्य सादितया तद्गतप्रतिबिम्बस्यापि सादित्वात्कथं तस्यानाद्यज्ञानाश्रयत्वमिति वाच्यम्। अन्तःकरणस्य स्वापादौ लयश्रवणेन जाग्रदादौ जन्मश्रवणेन च सादित्वावगमेऽपि तस्य स्थूलसूक्ष्मरूपेणानादितायाः 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात्' इति सूत्रे व्यवस्थापितत्वात्। यथा पुंस्त्वस्त्रीत्वादेः शुक्लशोणितस्तनादिरूपस्य बाल्यादावनभिव्यक्तस्य यौवने प्रादुर्भावस्तथास्यान्तःकरणस्य स्वापादावनभिव्यक्ततया सत एव स्थूलावस्थाप्राप्तिरूपाया अभिव्यक्तेर्युक्तत्वात्, असतः शशशृङ्गादेरुत्पत्त्यदर्शनादिति सूत्रार्थः। अविद्याया अनादिचैतन्यप्रतिबिम्बाश्रितत्वस्य मायाविद्याभेदवादनिरूपणावसरे समर्थितत्वादिति भावः। **प्रत्येकमिति।** द्वित्वबहुत्वादिवदज्ञानस्य

**मानमुत्पन्नविद्यं कंचिज्जहाति नष्टां व्यक्तिमिव जातिः, स एव मोक्षः अन्यं यथापूर्वमाश्रयतीति व्यवस्थेत्याहुः ॥**

---

सर्वजीवव्यक्तिषु व्यासज्यवृत्तित्वे सर्वेषां प्रत्येकम् 'अहमज्ञः' इति प्रत्यक्ष न स्यात् । व्यासज्यवृत्तिधर्मप्रत्यक्षस्य यावदाश्रय-प्रत्यक्षसापेक्षत्वेनैकैकस्य जीवस्य सर्वजीवप्रत्यक्षाभावादित्यर्थः । वस्तुतस्त्वज्ञानस्य व्यासज्यवृत्तित्वेऽपि तत्प्रत्यक्षस्य नित्यसाक्षि-रूपतया यावदाश्रयप्रत्यक्षानपेक्षणादुक्तनियमस्य जन्यप्रत्यक्षविषय-त्वादिति मन्तव्यम् । कंचिदिति । उत्पन्नया विद्यया मनसो निवृत्तौ तन्निरूपितप्रतिबिम्बभावस्यापि निवृत्ततया तद्विशिष्टचैतन्यरूप-व्यक्तिनाशादिति भाव । तथा च श्रुतिः— 'जहात्येनां भुक्तभो-गामजोऽन्य' ' इति । एनामजाशब्दितामविद्याम । जीवेन भुक्ता भोगा यस्या सा भुक्तभोगा । भुज्यन्त इति व्युत्पत्त्या भोगश-ब्दिताना विषयाणामविद्यापरिणामत्वादिति भावः । अजो जन्मर-हितः । अन्य उत्पन्नविद्यो जीव इति श्रुत्यर्थ' । स एवेति । त्याग एवेत्यर्थ' । अन्यमिति । अज्ञमिति भाव' । तथा च श्रुति — 'अजो ह्येको जुषमाणोऽनुशेते' इति । एकः पुनरजो विवेकरहित. कार्यकरणसघातरूपेण परिणतामविद्यां जुषमाणः सेवमानस्तत्राहं-ममाभिमानवान्सन्ननुशेते तामनुसृत्य शेते वर्तते न जहातीति यावत् । अत्राज्ञानं कंचिज्जहात्यन्यमाश्रित्यैव तिष्ठतीत्युक्त्याप्यज्ञान-संबन्धासंबन्धावेव बन्धमोक्षावित्युक्त भवति, तदुक्तेरर्थान्तरास-भवात् ॥

**इतरे तु प्रतिजीवमविद्याभेदमभ्युपगम्यैव तदनुवृत्ति-निवृत्तिभ्यां बन्धमुक्तिव्यवस्थां समर्थयन्ते ॥**

**अस्मिन्पक्षे कस्याविद्यया प्रपञ्चः कृतोऽस्त्विति चेत्— विनिगमकाभावात्सर्वाविद्याकृतोऽनेकतन्त्वारब्ध-**

---

अज्ञानसंबन्धतदभावौ बन्धमोक्षाविति मतद्वयमपि तस्य ज्ञान-नाश्यत्वप्रतिपादकश्रुतिस्मृतिभाष्यादिस्वारस्यविरुद्धं मत्वा तदविरुद्धं मतमाह—**इतरे त्विति** । **अभ्युपगम्यैवेति** । अविद्याभेदानुपगमे तत्सत्त्वतन्नाशरूपयोर्बन्धमोक्षयोरुपपादयितुमशक्यत्वात् । न च तस्या एकत्वेऽप्यंशवत्त्वकल्पनया तन्नाशरूपो मोक्ष प्रागुपपादित इति वाच्यम् । विरोधिविद्योदये तदवस्थानायोगस्याप्युक्तत्वात् । न च जीवन्मुक्तौ तल्लेशानुवृत्त्यभ्युपगमविरोध इति वाच्यम् । अविद्या-नाशेऽपि तत्संस्कारस्य यावत्प्रारब्धक्षयमनुवर्तमानस्याविद्यालेश-त्वेन विवक्षिततायाः सदृष्टान्त वक्ष्यमाणत्वादिति भावः ॥

एव नानाजीववादे बन्धमोक्षव्यवस्था बहुप्रकारामुपपाद्य तदुप-पादनोपयोगितया प्रसक्तमविद्यानानात्वमुपजीव्याक्षेपमवतारयति—**अस्मिन्पक्ष इति** । अविद्यानानात्वपक्ष इत्यर्थः । **कस्येति** । किमे-कस्य जीवस्याविद्यया प्रपञ्चारम्भ उत सर्वेषामविद्याभि. । नाद्यः, विनिगमनाविरहात् । न द्वितीय, एकाविद्यानाशे सर्वप्रपञ्चनाशा-पत्त्या मुक्तेतरजीवानां प्रपञ्चानुपलब्धिप्रसङ्गादित्याक्षेपाभिप्रायः । द्वितीयपक्षं परिगृह्य तत्रोक्तानुपपत्तिं परिहरति— **विनिगमका-**

**पटवत् । एकस्य मुक्तौ तदविद्यानाश एकतन्तुनाशे पटस्येव तत्साधारणप्रपञ्चस्य नाशः । तदैव विद्यमानतन्त्वन्तरैः पटान्तरस्येवेतराविद्याभिः सकलेतरसाधारणप्रपञ्चान्तरस्योत्पादनमित्येके ॥**

**तत्तदज्ञानकृतप्रातिभासिकरजतवन्न्यायमते तत्तदपेक्षाबुद्धिजन्यद्वित्ववच्च तत्तदविद्याकृतो वियदादिप्रपञ्चः**

---

भावादित्यादिना । **सर्वाविद्याकृत इति** । सर्वेषां जीवाना सर्वाविद्यापरिणाम इत्यर्थः । यद्वा सर्वाविद्याविषयीकृतब्रह्मविवर्तः प्रपञ्च इत्यर्थः । प्रथमव्याख्याने दृष्टान्तमाह— **अनेकतन्त्वारब्धेति**। **सकलेतरेति** । सकलाः समस्ता मुक्तजीवापेक्षया य इतरे तेषां साधारणप्रपञ्चान्तरस्येत्यर्थः ॥

प्रपञ्चस्य सर्वाविद्याकार्यत्वेऽपि तद्भेदात्प्रपञ्चस्यापि प्रतिपुरुष भेद एवेति मतं सदृष्टान्तमाह— **तत्तदिति** । ननु यत्रैकदा बहूनां शुक्तौ रजतभ्रमो भवति तत्र प्रतिपुरुषमज्ञानभेदेन तत्कृतरजतभेदोऽत्र दृष्टान्तत्वेन वक्तव्यः । स च न सभवति, तत्रापि तावत्पुरुषाणामज्ञानैरेकस्यैव रजतस्योत्पत्तिसंभवादिति चेत् , न । तत्र दैवयोगादेकस्य पुरुषस्य प्रथमं शुक्तित्वविशेषदर्शने सति 'नेदं रजतम्' इति बाधकप्रत्यक्षेण सोपादानस्य रजतस्य नाशेऽपि तदितरेषां रजतभ्रमानुवृत्त्या रजतभेदस्यावश्यिकतया दृष्टान्तसि-

**प्रतिपुरुषं भिन्नः । शुक्तिरजते 'त्वया यद्दृष्टं रजतं तदेव मयापि' इतिवदैक्यभ्रममात्रमित्यन्ये ॥**

**जीवाश्रिताविद्यानिवहाद्भिन्ना मायैवेश्वराश्रिता प्रप-**

---

द्धेरिति भावः । **न्यायमत इति** । सिद्धान्ते त्वेकत्ववद्द्वित्वादिकमपि यावद्द्रव्यभाव्येव । न तु तत्तदपेक्षाबुद्धिजन्यम्, अनन्तद्वित्वादेस्तदुत्पत्त्यादीनां च कल्पने गौरवात् । अपेक्षाबुद्धेस्तद्व्यञ्जकत्वाभ्युपगमान्न सदा तत्प्रत्यक्षापत्तिरिति स्वीकारादिति भावः । ननु तर्हि यथा तत्तद्रजतं तस्य तस्यैव प्रत्यक्षं नान्यस्य, तथा तत्तदविद्याकल्पितः प्रपञ्चोऽपि तस्य तस्यैव प्रत्यक्षः स्यान्नान्यस्य । तथा च यः प्रपञ्चस्त्वयानुभूयते स एव मयाप्यनुभूयत इति प्रत्यभिज्ञानप्रत्यक्षं न स्यादिति शङ्कां दृष्टान्तेन परिहरति— **शुक्तिरजत इति** । उपलक्षणमेतत् । 'यौ द्वौ रामकृष्णौ त्वया दृष्टौ तावेव मयापि दृष्टौ' इति प्रत्यभिज्ञानं न्यायमते द्वित्वभेदेऽपि दृश्यते, तद्वदिति बोध्यम् ॥

वियदादिप्रपञ्चो न जीवविद्यापरिणामः, किं तु जीवाश्रिताविद्यासंघाताद्भिन्ना माया सर्वजीवान्प्रति साधारणी वियदादिप्रपञ्चपरिणाम्युपादानमुपेयते । अतो वियदादिप्रपञ्चस्यैकत्वात्तदेकत्वप्रतीतिर्न भ्रममात्रमिति मतं दर्शयति— **जीवाश्रितेति** । मायाया अविद्याभ्यो भिन्नत्वे ईश्वराश्रितत्वे च प्रमाणादिकं प्रागेव दर्शितमिति नात्र तदुच्यते । अविद्यानां प्रपञ्चोपादानत्वाभावे वैयर्थ्यमाश-

**ञ्चकारणम् । जीवानामविद्यास्त्वावरणमात्रे प्रातिभासिकशुक्तिरजतादिविक्षेपेऽपि वोपयुज्यन्त इत्यपरे ॥**

---

ङ्क्याह— **जीवानामिति** । उक्तशङ्कानिवृत्त्यर्थस्तुशब्दः । यत्किंचित्कार्यं प्रत्यप्युपादानत्वाभावो मात्रशब्दार्थः । न च 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः' इति भगवद्वचने, अहं परमात्मा सर्वस्य प्राणिजातस्य प्रकाशः पूर्णानन्दादिरूपेण स्फुरद्रूपो न भवामि, मम सर्वज्ञत्वसर्वेश्वरत्वसर्वात्मकत्वादिधर्मजात घटयन्त्या माययावृतत्वादित्यर्थक ईश्वराश्रितमायाया एव ब्रह्मावारकत्वप्रतिपादनात्तद्विरोध इति वाच्यम् । 'ब्रह्म तत्त्वतो न जानामि' इत्यावारकस्य जीवाश्रितत्वानुभवानुसारेण जीवाश्रिताविद्याया एव तदावारकत्वे वक्तव्ये सति भगवद्वचनगतमायापदस्य जीवचैतन्ये संसारघटकाविद्यालक्षकत्वोपपत्तेरिति भावः । अविद्याया आवरण इव प्रातिभासिकविक्षेपेऽपि परिणाम्युपादानत्वस्वीकारान्न वैयर्थ्यशङ्कावकाश इत्याशयेनाह— **प्रातिभासिकेति** । ननु जीवाश्रिताविद्यानां जीवचैतन्याध्यस्तप्रातिभासिकस्वप्नप्रपञ्चोपादानतया तत्रोपयोगसंभवेऽपि शुक्तिरजताद्युपादानत्व न संभवति, शुक्त्याद्यवच्छिन्नचैतन्ये रजताद्यधिष्ठाने तासामभावादिति चेत्, सत्यम् । आदिपदसंगृहीतः स्वप्न एवात्र विवक्षित इत्यदोषः । यद्वा वाचस्पतिमत इव शुक्तिरजतादेरपि जीवाविद्याविषयीकृतशुक्त्याद्यवच्छिन्नचैतन्यविवर्तत्वमभिप्रेत्य जीवाविद्यानां प्रातिभासिकरजतादावुपयोगकथ-

अवसितमुपादानत्वं तत्प्रसक्तानुप्रसक्तं च ॥

अथ कीदृशं कर्तृत्वम् । केचिदाहुः— 'तदैक्षत'

---

नोपपत्तेर्न दोष ॥

पूर्वमुक्तेऽभिन्ननिमित्तोपादानत्वरूपे ब्रह्मलक्षण उपादानत्व त्रिवर्ताधिष्ठानत्वरूपमिति साधितम । तत्प्रसङ्गाज्जीवेश्वरनिरूपणं प्राप्तम् । तदनु जीवैकत्वनानात्वबन्धमोक्षप्रपञ्चैकत्वनानात्वनिरूपण प्रसक्तम् । तदेतत्सर्वं निरूपितमिति निरूपयिष्यमाणार्थप्रतिपत्त्युपयोगितयोपसंहरति— **अवसितमिति** । समाप्तमित्यर्थः । **उपादानत्वमिति** । तन्निरूपणमित्यर्थः ॥

लक्षणान्तर्गत कर्तृत्व निरूपयितुमाक्षिपति— **अथेति** । उदासीनस्य ब्रह्मणः कर्तृत्वधर्मासंभवादित्यर्थः । स्वतस्तदसंभवेऽप्यौपाधिक तत्संभवतीति परिहरति— **केचिदाहुरित्यादिना** । यद्वा जगदुपादानस्य ब्रह्मणो न तत्कर्तृत्वं संभवति, घटाद्युपादानस्य मृदादेस्तत्कर्तृत्वादर्शनादित्याक्षिपति— **अथेति** । घटेश्वरसंयोगादावुपादानस्यैवेश्वरस्य कर्तृत्वदर्शनाद्ब्रह्मण एव कर्तृत्वप्रतिपादकश्रुतिबलाच्च तस्य तत्संभवतीति परिहरति— **केचिदाहुरित्यादिना** । अथ वा ब्रह्मणः कर्तृत्व कीदृशमिह लक्षणे विवक्षितम् । किं ज्ञानचिकीर्षाकृतिमत्त्वरूपं किं वा कार्यानुकूलज्ञानवत्त्वरूपं कार्यानुकूलस्रष्टव्यालोचनात्मकज्ञानवत्त्वरूपं वा । नाद्यः, ब्रह्मणस्तादृशकर्तृत्वे माना-

'सोऽकामयत' 'तदात्मानं स्वयमकुरुत' इति श्रवणान्न्यायमत इव कार्यानुकूलज्ञानचिकीर्षाकृतिमत्त्वरूपं तदिति ॥

अन्ये तु—चिकीर्षाकृतिकर्तृत्वनिर्वाहाय चिकीर्षाकृत्यन्तरापेक्षायामनवस्थाप्रसङ्गात् कार्यानुकूलज्ञानवत्त्वमेव

---

भावात् । न द्वितीयतृतीयौ, कार्यानुकूलज्ञानस्य कार्यत्वे तत्कर्तृत्वनिर्वाहाय ज्ञानान्तरापेक्षायामनवस्थाप्रसङ्गात्तस्याकार्यत्वे च नित्यज्ञानस्वरूपस्य ब्रह्मणस्तादृशज्ञानवत्त्वरूपकर्तृत्वायोगादिति भावः । तत्र प्रथमपक्षं सप्रमाणं दर्शयति— **केचिदाहुरिति** । श्रुतिषु तच्छब्दा ब्रह्मपराः । स्वयमित्यस्यान्यानधिष्ठितमित्यर्थः । आत्मानं जगदात्मनाकुरुत कृतवदित्यर्थः । एताभि श्रुतिभि सृष्ट्यनुकूला ज्ञानेच्छाकृतयः प्रतिपाद्यन्त इति भावः । न च ज्ञानादीनामपि कार्यत्वात्तत्कर्तृत्वाय ज्ञानाद्यन्तरापेक्षायामनवस्था स्यादिति वाच्यम् । ज्ञानादित्रितयातिरिक्तकार्य उक्तरूपकर्तृत्वस्य विवक्षितत्वान्नानवस्थाप्रसङ्गः । ज्ञानादित्रयं प्रति त्वन्यदेव कर्तृत्व भविष्यतीत्यभिप्रायः ॥

प्रथमपक्षं दूषयन्द्वितीयपक्षं साधयति— **अन्ये त्विति** । **अनवस्थाप्रसङ्गादिति** । कर्तृत्वलक्षणाननुगमपरिहाराय कार्यमात्रं प्रति ज्ञानादित्रितयवत्त्वरूपे कर्तृत्वे वक्तव्ये सत्यनवस्थाप्रसङ्गो भवत्येवेति भावः । **ज्ञानवत्त्वमेवेति** । इच्छाकृत्योरेवका-

**ब्रह्मणः कर्तृत्वम् । न च ज्ञानेऽप्येष प्रसङ्गः, तस्य ब्रह्म-स्वरूपत्वेनाकार्यत्वात् । एवं च विवरणे जीवस्य सुखा-**

---

रेण व्यवच्छेद क्रियते, तयोः कर्तृत्वलक्षणप्रवेशे च गौरवादिति भावः । न चैवमुदाहृतश्रुत्योरिच्छाकृतिप्रतिपादन व्यर्थं स्यादिति वाच्यम् । ताभ्या श्रुतिभ्या तयो सृष्टिहेतुत्वलाभेऽपि कर्तृत्वनिर्वाहकतया तयो प्रतिपादनमित्यत्र मानाभावादिति भावः । **अकार्यत्वादिति** । नित्यज्ञानस्वरूपस्य ब्रह्मणस्तादृशज्ञानवत्त्वमौपाधिकभेदमादाय द्रष्टव्यम । न चैवमपि सृष्टिकारणज्ञानस्य 'तदैक्षत' इति श्रुत्या कादाचित्कत्वप्रतिपादनाविरोध इति वाच्यम् । ब्रह्मस्वरूपतया नित्यस्यापि ज्ञानस्य प्राण्यदृष्टपरिपाकलक्षणो य. कादाचित्कः सहायस्तद्विशिष्टतया कादाचित्कत्वमभिप्रेत्य तच्छ्रुत्युपपत्तेरिति भावः । कार्यानुकूलज्ञानवत्त्वमात्र कर्तृत्वमित्यत्र गमकमाह— **एवं चेति** । इच्छाकृत्यो. कर्तृत्वलक्षणाननुप्रवेशे विवक्षिते सतीत्यर्थः । **जीवस्येति** । तस्य सुखदुःखाद्युत्पत्त्यनुकूलज्ञानं साक्षिरूपं यथा विद्यते तथा तदनुकूलेच्छादिकं नास्ति, अननुभवादनभ्युपगमाच्च । न चेदमनुपपन्नम्, सुखेच्छया तत्साधनानुष्ठानद्वारा सुखोत्पत्तेरनुभवसिद्धत्वादिति वाच्यम् । सुखाद्युपादानान्त.करणगोचरचिकीर्षाकृत्योरभावस्यात्र विवक्षितत्वात् । तथा च कार्यानुकूलज्ञानवत्त्वमात्रं कर्तृत्वमित्यङ्गीकारे सत्येव विवरणोक्तिः संगच्छते नान्यथेत्यर्थः । 'निःश्वसितमस्य वेदा वीक्षितमेतस्य पञ्च भूतानि ।

दिकर्तृत्वोक्तिः, 'वीक्षणमात्रसाध्यत्वाद्वियदादि वीक्षितं हिरण्यगर्भद्वारा वीक्षणाधिकप्रयत्नसाध्यत्वाद्भौतिकं स्मितम्' इति कल्पतरूक्तिश्च संगच्छत इति वदन्ति ॥

---

स्मितमेतस्य चराचरमस्य च सुप्तिर्महाप्रलय ॥' इति वाचस्पतिश्लोके महाभूतानां ब्रह्मवीक्षितत्वमुक्तम्, तथा भौतिकस्य चराचरप्रपञ्चस्य ब्रह्मस्मितत्वमुक्तम्। तदुभयतात्पर्यकथनपरे कल्पतरुग्रन्थे ब्रह्मवीक्षणमात्रसाध्यत्वं महाभूतेषु तद्वीक्षितत्वनिर्देशस्यालम्बनं दर्शितम्। तच्च ब्रह्मणो महाभूतसृष्ट्यनुकूलज्ञानवत्तदनुकूलचिकीर्षाकृत्योरप्युपगमे न संगच्छते, वीक्षणातिरिक्तचिकीर्षादिव्यावर्तकमात्रपदविरोधात्। लोके हि मन्दहासरूपं स्मितं ज्ञानाधिकप्रयत्नसाध्यं प्रसिद्धम्। तथा च परब्रह्मणो भौतिकसृष्टिं प्रति यथा वीक्षणमपेक्षितं तथा हिरण्यगर्भोत्पत्तिलक्षणव्यापारोऽप्यधिकोऽपेक्षित, चराचरसृष्टौ परब्रह्मण इव हिरण्यगर्भस्यापि कर्तृतायाः श्रुतिस्मृतिसिद्धत्वात्। तथा च परब्रह्मणो भौतिकसृष्ट्यनुकूलं यद्वीक्षणं तदधिकव्यापारापेक्षित्वं चराचरस्य ब्रह्मस्मितत्वनिर्देशालम्बनं दर्शितम्। तदपि महाभूतसृष्टावेव वीक्षणाधिकप्रयत्नापेक्षाया न संभवति। हिरण्यगर्भद्वारेत्यस्य वाक्यस्य हिरण्यगर्भोत्पत्तिमपेक्ष्येत्यर्थः। न तु हिरण्यगर्भः साक्षात्कर्ता ब्रह्म च प्रयोजककर्त्रिति यथाश्रुतार्थो ग्राह्यः, द्वितीयाध्यायान्तिमाधिकरणे परमेश्वरस्य भौतिकसृष्टावपि साक्षात्कर्तृतायाः साधितत्वादिति भावः। वाचस्पतिश्लोकश्च ब्रह्म-

**अपरे तु— कार्यानुकूलस्रष्टव्यालोचनरूपज्ञानवत्त्वं कर्तृत्वम्; न कार्यानुकूलज्ञानवत्त्वमात्रम्, शुक्तिरजत-स्वाप्नभ्रमादिष्वध्यासानुकूलाधिष्ठानज्ञानवत्त्वेन जीवस्य कर्तृत्वप्रसङ्गात्। न चेष्टापत्तिः 'अथ रथान्रथयोगान्पथः सृजते स हि कर्ता' इत्यादिश्रुत्यैव जीवस्य स्वप्नप्रपञ्चकर्तृत्वोक्तेरिति वाच्यम्। भाष्यकारैः 'लाङ्गलं गवादीनुद्वहतीतिवत्कर्तृत्वोपचारमात्रं रथादिप्रति-**

---

स्तुतिपरः। ब्रह्म ह्यतिप्रशस्तम्। तथा हि— यस्य ब्रह्मण पुरुषनिःश्वासवत्प्रयत्न विनैव वेदाः सर्वे कार्यभूताः, यस्य च वीक्षणादेव महाभूतानि भवन्ति, यस्य च हिरण्यगर्भेण सह चराचरात्मकं विश्वं मन्दहासमात्रम्, यस्य च महाप्रलयोऽपि सुषुप्तिप्रायः, तत्प्राशस्त्ये को विस्मय इति भाव ॥

द्वितीयपक्षेऽपि दोष वदस्तृतीयपक्ष समर्थयते— **अपरे त्विति। स्रष्टव्यालोचनेति**। मयेदं स्रष्टव्यमित्याकारकमित्यर्थः। **अध्यासेति**। अध्यासस्याध्यस्यमानरजतादेरनुकूलं यदधिष्ठानज्ञान तद्वत्त्वेनेत्यर्थः। **न चेष्टापत्तिरिति**। न चेत्यस्य वाच्यमित्यनेन संबन्धः। अथेत्यस्य स्वप्नकाल इत्यर्थः। जीवस्य रथादिस्रष्टृत्वे हेतुमाह— **स हि कर्तेति**। हि यस्मात्कारणात्स्वाप्नरथादिहेतु कर्मकर्ता जीवस्तस्मादित्यर्थः। **भाष्यकारैरिति**। 'लाङ्गलं गवादीनुद्वहति' इति प्रयोगे लाङ्गलस्य गवादिस्थितिकर्तृत्वरूपं गवा-

भाननिमित्तत्वेन' इति व्याख्यातत्वादित्याहुः। अनेनैव निखिलप्रपञ्चरचनाकर्तृमात्रेणार्थसिद्धं सर्वज्ञत्वं ब्रह्मणः 'शास्त्रयोनित्वात्' इत्यधिकरणे वेदकर्तृत्वेनापि समर्थितम् ॥

---

क्षुद्रोद्धृत्व मुख्य नास्ति, किं तु लाङ्गले सति कृषिद्वारा गवादिस्थितिहेतुपलालादितृणलाभोऽस्तीति कृत्वोपचारादुच्यते 'गवादीनुद्वहति' इति; तद्वत्स्वाप्नरथादिपदार्थोपलब्धिहेतुधर्मादिकर्तृत्वेन रथादिप्रतिभाननिमित्तत्वरूपेण हेतुना तस्य कर्तृत्वमुपचर्यते 'स हि कर्ता' इति श्रुतौ- इति भाष्यकारै कर्तृत्वस्यौपचारिककर्तृत्वरूपतयोक्तत्वादित्यर्थः। एतेन विवरणे सुखादिकर्तृत्वोक्तिरप्युपचारमात्रपरा व्याख्याता। 'मयेद सुखदुःखादि स्रष्टव्यम्' इत्यालोचनरूपज्ञानाभावेऽपि सुखादिदर्शनेन मुख्यकर्तृत्वासंभवात् 'वीक्षणमात्रसाध्यत्वात्' इति कल्पतरौ स्रष्टव्यालोचनरूप वीक्षणं विवक्षितमिति न तद्विरोध इति द्रष्टव्यम। जन्मादिसूत्रेण निखिलजगत्कर्तृत्वे सति तदुपादानत्वे ब्रह्मणो लक्षणत्वेन प्रतिपादिते सति तस्य सर्वज्ञत्वमर्थात्सिध्यति, निखिलजगत्सृष्टिस्थितिसंहारकर्तृत्वस्य सर्वज्ञत्वं विनासंभवादित्याह— **अनेनैवेति**। सर्वज्ञत्वसिद्धौ हेत्वन्तरमाह— **शास्त्रयोनित्वादिति**। अस्य सूत्रस्यार्थमाह— **वेदकर्तृत्वेनापीति**। ननु यथा वेदकर्तृत्वं भाष्यादिषूक्तप्रकारेण सर्वज्ञत्वं साधयति तथा जन्मादिसूत्रोपात्तं सर्वकर्तृत्वमपि तत्साधयति। तथा च पूर्वसूत्रेऽर्थसिद्धमिह तु

**अथ कथं ब्रह्मणः सर्वज्ञत्वं संगच्छते, जीववदन्तःकरणाभावेन ज्ञातृत्वस्यैवासंभवात् ॥**

**अत्र सर्ववस्तुविषयकसकलप्राणिधीवासनोपरक्ताज्ञा-**

---

साध्यत इत्युक्तौ को हेतुरिति, उच्यते— पूर्वसूत्र लक्षणपरं न तु सर्वज्ञत्वसाधनपरम्; इद तु तत्साधनपरमिति तात्पर्यसत्त्वासत्त्वाभ्यां तथा व्यवहारः। ततश्च ब्रह्म सर्वज्ञ शास्त्रकर्तृत्वादिति सूत्रयोजना। ननु ब्रह्मण सर्वज्ञत्वम् 'यः सर्वज्ञ. सर्ववित्' 'गुणी सर्वविद्य' इत्यादिश्रुत्या कण्ठत एव प्रतिपाद्यते। तत्कात्र साधनापेक्षेति चेत्, सत्यम्। श्रुत्युक्ते सर्वज्ञत्वे प्रतिपत्तिदार्ढ्यायोपपत्तिसमर्पणात् ॥

एवं श्रुत्युपपत्तिसिद्धं सर्वज्ञत्व निरूपयितुमाक्षेपमवतारयति— **अथेति**। जीवस्य हि स्वोपाध्यन्तःकरणवृत्तिज्ञानाश्रयत्वरूपं ज्ञातृत्वं प्रमाणसिद्धम्। ब्रह्मणश्चान्त.करणाभावाज्ज्ञातृत्व न सभवति। न च ब्रह्मणोऽप्यन्तःकरणमस्त्विति वाच्यम्। 'कार्योपाधिरय जीव' इति श्रुत्या तस्य जीवोपाधित्वेन नियमितत्वात्। ज्ञातृत्वं च सर्वज्ञत्वव्यापकम्, ज्ञातृत्वविशेषरूपत्वात्सर्वज्ञत्वस्य। तथा च ब्रह्मणो ज्ञातृत्वस्य व्यापकस्य निवृत्त्या व्याप्यसर्वज्ञत्वनिवृत्तिरित्यर्थः। ज्ञातृत्वाभावे सर्वज्ञत्व दूरापास्तमित्येवकारार्थः ॥

अन्तःकरणानां जीवोपाधित्वेऽपि तद्वासनानामीश्वरोपाधित्वात्संभवति कथंचित्तस्य सर्वज्ञत्वमिति परिहरति— **अत्र सर्वव-**

नोपाधिक ईश्वरः । अतस्तस्य सर्वविषयवासनासाक्षितया सर्वज्ञत्वमिति भारतीतीर्थादिपक्षः प्रागेव दर्शितः ॥

प्रकटार्थकारास्त्वाहुः— यथा जीवस्य स्वोपाध्यन्तःकरणपरिणामाश्चैतन्यप्रतिबिम्बग्राहिण इति तयोगाज्ज्ञातृत्वम्, एवं ब्रह्मणः स्वोपाधिमायापरिणामाश्चित्प्रतिबिम्बग्राहिणः सन्तीति तत्प्रतिबिम्बितैः स्फुरणैः कालत्रयवर्तिनोऽपि प्रपञ्चस्यापरोक्ष्येणाकलनात्सर्वज्ञत्वमिति ॥

---

स्त्विति । अत्रेत्यस्यास्मिन्नाक्षेप इत्यर्थः । **सर्वविषयवासनासाक्षितयेति** । स्वोपाधिभूतवासनाविषयसर्ववस्त्ववभासकतयेत्यर्थः ॥

अस्मिन्समाधाने प्रागुक्तमस्वरसं मनसि निधाय समाधानान्तरमाह— **प्रकटार्थकारास्त्विति** । यथान्तःकरण ज्ञातृत्वोपाधिस्तथा मायापि ज्ञातृत्वोपाधिर्भवत्येव । तथा च ब्रह्मणि मायोपाधिके सर्वज्ञत्वव्यापकस्य ज्ञातृत्वस्य निवृत्त्यभावान्न सर्वज्ञत्वनिवृत्तिशङ्केत्यर्थः । **स्वोपाधिमायेति** । 'मायिनम्' इति श्रुतेः 'मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः' इति वाक्यवृत्तिवचनाच्च मायाया ईश्वरोपाधित्वं सिद्धमिति भावः । सर्वज्ञत्वसर्वनियन्तृत्वसर्वात्मकत्वानि लक्षणान्यसाधारणधर्मा यस्य स सर्वज्ञत्वादिलक्षण इत्यर्थः । **आकलनादिति** । विषयीकरणादित्यर्थ ॥

तत्त्वशुद्धिकारास्तु— उक्तरीत्या ब्रह्मणो विद्यमाननिखिलप्रपञ्चसाक्षात्कारसंभवः, तज्जनितसंस्कारवत्तया च स्मरणोपपत्तेरतीतसकलवस्त्ववभाससिद्धिः, सृष्टेः प्राञ्मायायाः सृज्यमानाखिलपदार्थस्फुरणरूपेण जीवादृष्टानुरोधेन विवर्तमानत्वात्तत्साक्षितया तदुपाधिकस्य ब्रह्मणोऽपि तत्साधकत्वसिद्धेरनागतवस्तुविज्ञानोपपत्तिरिति सर्वज्ञत्वं समर्थयन्ते ॥

---

तत्त्वशुद्धिकारास्त्विति प्रकटार्थकाराणा मतेऽतीतानागतप्रपञ्चरूपविषयेऽपीश्वरीयं मायावृत्तिप्रतिविम्बरूपं ज्ञानमपरोक्षम् । तत्त्वशुद्धिकाराणा मतेऽतीतादिविषये जीवानामिवेश्वरज्ञानमपि परोक्षमेवेति विशेषार्थकस्तुशब्द । **विद्यमानेति** । लोके प्रत्यक्षज्ञानस्य वर्तमानवस्तुमात्रविषयकत्वस्वाभाव्यदर्शनेन तस्य कल्पनस्वभावातिलङ्घने कारणाभावात्सर्वज्ञत्वप्रतिपादकशास्त्रस्येश्वरीयज्ञानगतपरोक्षत्वापरोक्षत्वयोरुदासीनत्वादिति भाव । **तज्जनितेति** । विद्यमानवस्तुसाक्षात्कारजनितेत्यर्थ । अनागतवस्तुज्ञानमुपपादयति—**सृष्टेः प्रागिति** । स्फुरणपद वृत्तिपरम । **विवर्तमानत्वं** परिणममानत्वम् । **तदुपाधिकस्येति** । मायोपाधिकस्येत्यर्थ. । कथं तदुपाधिकत्वम्, अत आह— **तत्साक्षितयेति** । तस्यां मायायां प्रतिबिम्बितनयेत्यर्थः । सृष्टेः पूर्वकाले मायायास्तथा परिणामे कारणमाह— **जीवादृष्टेति** । **तत्साधकत्वसिद्धेरिति** ।

**कौमुदीकृतस्तु वदन्ति— स्वरूपज्ञानेनैव ब्रह्मणः स्वसंसृष्टसर्वावभासकत्वात्सर्वज्ञत्वम्, अतीतानागतयोरप्यविद्याचित्रभित्तौ विमृष्टानुन्मीलितचित्रवत्संस्कारा-**

---

मायावृत्तिकर्तृत्वसिद्धेरित्यर्थः । अनागतेति । अनागतवस्तुविषयकस्य ज्ञानस्य वृत्तिप्रतिबिम्बरूपस्य ब्रह्मण्युपपत्तिरित्यर्थः ॥

जीववद्ब्रह्मणोऽपि चैतन्यप्रतिबिम्बोपेतैर्वृत्तिज्ञानैः सर्वज्ञत्वं निरूपितं मतद्वयेन । इदानीं स्वरूपज्ञानेनैव तन्निरूपयति—कौमुदीकृतस्त्विति । नन्वतीतानागतप्रपञ्चयोः प्रलयकाले सृष्टिपूर्वकाले च सत्त्वे मानाभावात्तदा ब्रह्मणः सर्वज्ञत्वं न सिध्यति, असतोस्तयोश्चैतन्यसंसृष्टत्वासंभवादिति, नेत्याह— अतीतानागतयोरपीति । अतीतप्रपञ्चस्य प्रलयकाले संस्कारात्मना सत्त्वस्य देवताधिकरणे सूत्रभाष्यकारादिभिः साधितत्वात्तथानागतस्यापि सृष्टिपूर्वकाले संस्कारात्मनैव सत्त्वस्यारम्भणाधिकरणादिषु साधितत्वादतीतादिवस्तुसंसृष्टब्रह्मचैतन्यस्य तदापि सर्वज्ञत्वसिद्धिरिति भावः । चित्रस्यानुन्मीलितत्वमनभिव्यक्तत्वम् । तत्र हेतुर्विमृष्टत्वम् । अविद्यैव चित्रभित्तिरिति रूपकमत्र द्रष्टव्यम् । अत्रेदं चिन्त्यम्—स्थूलप्रपञ्चस्थितिकाले संस्कारात्मकसूक्ष्मप्रपञ्चो नास्ति । प्रलयकालादौ च स्थूलः प्रपञ्चो नास्ति । तथा च ब्रह्मचैतन्यस्य सदा सर्वप्रपञ्चसंसृष्टत्वाभावात्सदा तस्यासंकुचितसर्वज्ञत्वं न संभवतीति । स्वरूपज्ञानेनैवेत्यत्रत्यस्यावधारणस्य व्यत्र-

त्मना सत्त्वेन तत्संसर्गस्याप्युपपत्तेः ; न तु वृत्तिज्ञानैस्तस्य सर्वज्ञत्वम् ; 'तमेव भान्तमनुभाति सर्वम्' इति सावधारणश्रुतिविरोधात्, सृष्टेः प्राक् 'एकमेवाद्वितीयम्' इत्यवधारणानुरोधेन महाभूतानामिव वृत्तिज्ञानानामपि प्रलयस्य वक्तव्यतया ब्रह्मणस्तदा सर्वज्ञत्वाभावापत्त्या प्राथमिकमायाविवर्तरूप ईक्षणे तत्पूर्वके

---

च्छेद्यमाह— न तु वृत्तिज्ञानैरिति । श्रुतिगतस्यावधारणस्य स्वप्रकाशात्मातिरिक्तानवभास्यमादित्यादिजगदित्यर्थः । अत्रेदं चिन्त्यम्— ब्रह्मचैतन्यस्य जगदवभासनार्थं मायावृत्त्यपेक्षाया यदि श्रौतमवधारणं विरुध्यते तदा जीवचैतन्यस्य घटाद्यवभासनार्थमन्तःकरणवृत्त्यपेक्षायामपि तद्विरुध्यत एव । यदि चान्तःकरणवृत्तीना जडत्वात्तदपेक्षायामपि सर्वं जडवस्तु चैतन्यमात्रावभास्यमिति सावधारणश्रुत्यर्थस्य न बाध, तदा मायावृत्त्यपेक्षायामपि तुल्य समाधानमिति । प्रलयकाले सर्वज्ञत्वाभावे को दोष, तत्राह— प्राथमिकेति । तदा सर्वज्ञत्वाभावे सति सर्गादौ 'तदैक्षत' इति श्रुत्युक्त भूतसृष्ट्यनुकूलमीक्षण प्रति कर्तृत्वासंभवेनेक्षणपूर्वकभूतादिसर्ग प्रत्यपि ब्रह्मणः कर्तृत्वाभावप्रसङ्गादित्यर्थः । अत्रापीद चिन्त्यम्—एवमपि सृष्टिपूर्वकाले ब्रह्मचैतन्यव्यतिरिक्तस्य मायातत्सबन्धादेः सत्त्वादद्वितीयत्वावधारण मुख्य न सभवति । यदि च मायादेरनादित्वप्रतिपादकश्रुत्यादिबलाद्व्याकृतकार्यात्मक द्वितीयाभावावधारणपर तद्वचनमित्युच्येत, तदा सर्वदा सर्वविषय-

**महाभूतादौ च स्रष्टृत्वाभावप्रसङ्गाच्च । एवं सति ब्रह्मणः सर्वविषयकज्ञानात्मकत्वमेव स्यान्न तु सर्वज्ञानकर्तृत्वरूपं सर्वज्ञत्वमिति चेत्, सत्यम् । सर्वविषयकज्ञानात्मकमेव ब्रह्म, न तु तस्य ज्ञानकर्तृत्वरूपं ज्ञातृत्वम-**

---

कज्ञानकर्तृत्वरूपसर्वज्ञत्वप्रतिपादकश्रुत्यादिबलात्सर्वज्ञत्वघटकमायावृत्तिसततिव्यतिरिक्तकार्याभावात्तद्वारणपरमद्वितीयत्ववचनमित्यपि कल्पनं तुल्यम् । मायावृत्तिभिः सर्वज्ञत्वसमर्थनमेव भाष्यसंमतम् । तथा चेक्षत्यधिकरणभाष्यम्— 'अपि चाविद्यादिमतः संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यात्, न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य' इति । सृष्टेः पूर्वकाले ब्रह्मणः स्रष्टव्यालोचनरूपमीक्षणं न संभवति, वृत्तिज्ञानरूपेक्षणस्य शरीरादिकारकसाध्यतया लोकसिद्धत्वेन ब्रह्मणस्तदा शरीराभावादिति साङ्ख्यशङ्कानिरासार्थमिदं भाष्यम् । जीवस्यैव वृत्तिज्ञानोत्पत्तिः शरीरादिसाध्या । ईश्वरस्य तु मायावृत्तिरूपज्ञानोत्पत्तिः शरीराद्यनपेक्षा । तथा च सृष्टेः पूर्वं प्रलयकालेऽपि . न मायावृत्तिरूपमीक्षणं सदा सर्वज्ञत्वं च संभवतीति समाधानभाष्याभिप्रायः । इदं भाष्यमित्थमेव व्याख्यातृभिर्निर्णीतम् । भाष्ये ज्ञानप्रतिबन्धकारणमविद्यादीति मन्तव्यम् । ततश्च मायावृत्तिभिः सर्वज्ञत्वसमर्थनपक्षदूषणमसंगतमिति मन्तव्यम् । शङ्कते— **एवं सतीति** । स्वरूपज्ञानेनैव सर्वज्ञत्वसमर्थने सतीत्यर्थः । **न त्विति** । स्वरूपज्ञानस्य नित्यत्वादिति भावः । **न तु तस्य ज्ञानकर्तृत्वरूपमिति** ।

**स्ति। अत एव 'वाक्यान्वयात्' इत्यधिकरणेऽपि ज्ञातृत्वं जीवलिङ्गमित्युक्तं भाष्यकारैः। 'यः सर्वज्ञः सर्ववित्' इत्यादि श्रुतिरपि तस्य ज्ञानरूपत्वाभिप्रायेणैव योजनीयेति॥**

---

ब्रह्मण इति शेषः। अत्र यद्यपि ज्ञातृत्वं सामान्यरूपं सर्वज्ञानकर्तृत्वं तु विशेषरूपमिति न तयोरभेदः सम्भवति, तथापि ब्रह्मणो ज्ञातृत्वं नास्तीत्यत्रैव तात्पर्यं न तु तयोरभेदोक्तावपीत्यविरोधः। **अत एवेति।** ब्रह्मणो ज्ञातृत्वाभावादेवेत्यर्थः। इत्युक्तमिति। बृहदारण्यके मैत्रेयीब्राह्मणे पठ्यते— 'आत्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः' इत्यादि। अत्र किं जीवो द्रष्टव्यत्वेनोपदिश्यत उत प्रत्यगभिन्नः परमात्मा निष्प्रपञ्चस्वभाव इति संशयः। तत्र पूर्वपक्षः— पूर्ववाक्ये भोक्तुर्जीवस्य प्रकृतत्वादुपसंहारेऽपि 'विज्ञातारमरे केन विजानीयात्' इति विज्ञातृत्वस्य जीवधर्मस्य कीर्तनाच्च जीव एवात्र द्रष्टव्य उपदिश्यत इति। सिद्धान्तस्तु— प्रत्यगभिन्नः परमात्मैव द्रष्टव्यतयोपदिश्यते। कुतः, वाक्यान्वयात्। तथा हि— अत्रात्मवेदनेन सर्वं विदितं भवतीति प्रतिपाद्यते। तच्च सर्वाधिष्ठानब्रह्मपरिग्रहे घटते, न जीवपरिग्रहे। तथा 'इदं सर्वमात्मा' इत्यादिवाक्यान्यपि सर्वात्मके ब्रह्मण्येव तात्पर्येण प्रतिपादकतयान्वितानि लक्ष्यन्ते। 'आत्मनस्तु कामाय सर्वं प्रियं भवति' इति पूर्ववाक्ये जीवपरामर्शस्तु लोकसिद्धं भोक्तारमनूद्य तस्य शुद्धब्रह्मरूपेण द्रष्टव्यत्वोप-

यद्यपि ब्रह्म स्वरूपचैतन्येनैव स्वसंसृष्टसर्वावभासकम्, तथापि तस्य स्वरूपेणाकार्यत्वेऽपि दृश्यावच्छिन्नरूपेण ब्रह्मकार्यत्वात् 'यः सर्वज्ञः सर्ववित्' इत्यादिज्ञानकर्तृत्वश्रुतेरपि न कश्चिद्विरोध इत्याचार्यवाचस्पतिमिश्राः ॥

---

देशार्थः । 'विज्ञातारम्' इति वाक्यं तु जीवस्य विज्ञातृत्वरूपधर्मपरं न भवति, तस्य वाक्यस्य मुक्तजीवपरत्वान्मुक्तजीवे च निरुपाधिके तस्यासभवात् । किं तु भूतपूर्वगत्या विज्ञातृत्वानुवादमात्रम्, स्वातन्त्र्येण न कस्यचिदर्थस्य साधकम् । तस्मान्मैत्रेयीब्राह्मणं प्रत्यगभिन्ने निर्विशेषे द्रष्टव्ये समन्वितमिति सिद्धमिति । अत्र ज्ञातृत्व ब्रह्मसाधारणं चेज्जीवलिङ्गतया भाष्यकारैर्नोपन्यस्येत । उपन्यस्तं च । तस्माज्ज्ञातृत्वं ब्रह्मणो नास्तीति गम्यत इति भावः । ईश्वरस्य सर्वविषयकज्ञानकर्तृत्वानभ्युपगमे श्रुतिविरोधमाशङ्क्याह— यः सर्वज्ञ इति । प्रकृत्यर्थभूतज्ञानस्य नित्यत्वादिति भावः ॥

ननु नित्यचैतन्यमात्रस्य सर्वत्र लक्ष्यतया ज्ञाधातुवाच्यत्वायोगाद्विशिष्टचैतन्यस्य प्रकृत्यर्थत्वं वाच्यम् । तथा च विशिष्टस्य कार्यत्वसंभवात्प्रत्ययश्रुत्यर्थकर्तृत्वस्य न विरोधः । ब्रह्मण. सर्वज्ञानकर्तृत्वप्रतिपादकश्रुतिविरोधेन ज्ञातृत्वस्य जीवलिङ्गत्वोक्तेरभ्युच्चयमात्रत्वोपपत्तेस्तदाधिकरणासिद्धान्ताभिमतनिर्विशेषब्रह्मव्यावृत्त-

**नन्वीश्वरवज्जीवोऽपि वृत्तिमनपेक्ष्य स्वरूपचैतन्येनैव किमिति विषयान्नावभासयति ॥**

**अत्रोक्तं विवरणे— ब्रह्मचैतन्यं सर्वोपादानतया सर्वतादात्म्यापन्नं सत् स्वसंसृष्टं सर्वमवभासयति ; न जीवचैतन्यम्, तस्याविद्योपाधिकतया सर्वगतत्वेऽप्यनुपा-**

---

त्वमात्रेण विज्ञातृत्वस्य पूर्वपक्षलिङ्गत्वोपन्यासोपपत्तेश्च भाष्यकारैरेव मुख्यस्य सर्वविषयकज्ञानकर्तृत्वस्येक्षत्यधिकरणे प्रतिपादितत्वाच्च प्रत्ययश्रुते. स्वार्थपरत्वसंभवे तत्त्यागायोगाच्चेत्यस्वरसादाह— **यद्यपीत्यादिना** । चैतन्येनैवेति । न मायावृत्तिभिरित्येवकारार्थः । तर्हि प्रत्ययार्थबाधः, नेत्याह— **तथापीति** । तस्य स्वरूपचैतन्यस्येत्यर्थः । **दृश्यावच्छिन्नेति** । न चानादिमायादिरूपदृश्यावच्छिन्नचैतन्यस्य कथमुक्तप्रकारेणापि कार्यत्व सिध्येदिति वाच्यम् । मायादेरपि तत्तत्कार्यतादात्म्यापत्त्या कार्यत्वसिद्धौ मायाद्यवच्छिन्नस्यापि कार्यत्वस्य सुसंपादत्वादिति भावः ॥

आक्षिपति— **नन्विति** । **नावभासयतीति** । न चात्रेष्टापत्तिर्वक्तुं शक्यते, तथा सत्यविद्याप्रतिबिम्बचैतन्यरूपजीवस्य व्यापकतया स्वसंसृष्टसकलजगदवभासकत्वापत्त्या सर्वज्ञत्वप्रसङ्गात्स्वरूपचैतन्यस्य कारकानपेक्षतया चक्षुरादिवैयर्थ्यप्रसङ्गाच्चेति भावः ॥

**अत्रोक्तमिति** । अस्मिन्नाक्षेपे समाधानमुक्तमित्यर्थः । **न**

दानत्वेनासङ्गित्वात् । यथा सर्वगतं गोत्वसामान्यं स्वभावादश्वादिव्यक्तिसङ्गित्वाभावेऽपि सास्नादिमद्व्यक्तौ संसृज्यते, एवं विषयान्तरासङ्ग्यपि जीवः स्वभावादन्तःकरणे संसृज्यते । तथा च यदान्तःकरणस्य परिणामो वृत्तिरूपो नयनादिद्वारेण निर्गत्य विषयपर्यन्तं चक्षूरश्मिरिव झटिति दीर्घप्रभाकारेण परिणम्य विषयं व्याप्नोति तदा तमुपारुह्य तं विषयं गोचरयति । केव-

---

जीवचैतन्यमिति । यथा जगद्ब्रह्मसंसृष्टं तथा जीवसंसृष्टं न भवति । अतो न तस्य सर्वज्ञत्वप्रसक्तिरित्यर्थः । ननु जीवस्य यथा घटादिविषयैः संबन्धाभावस्तथान्तःकरणादिनापि संबन्धाभावस्तुल्यः, उपादानत्वाभावादेव । तथा चान्तःकरणादेर्वृत्तिं विनैव जीवचैतन्यरूपसाक्षिभास्यत्वं न स्यादित्याशङ्क्य, उपादानत्वाभावेऽपि जीवचैतन्यस्यान्तःकरणादिना तादात्म्यसंबन्धे दृष्टान्तमाह– यथा सर्वगतमिति । संसृज्यत इति । अतो नान्तःकरणादेः साक्षिभास्यत्वविरोध इति भावः । चक्षुरादिवैयर्थ्यप्रसङ्गं परिहरति— तथा चेत्यादिना । तथा चेत्यस्य जीवस्य स्वतो विषयसंबन्धाभावे सतीत्यर्थः । अन्तःकरणपरिणामस्य सहसा विषयव्याप्तौ दृष्टान्तश्चक्षूरश्मिरिवेति । तमिति । परिणाममित्यर्थः । गोचरयतीति । जीवचैतन्यमिति शेषः । विषयदेशे सतोऽपि जीवचैतन्यस्य स्वतो विषयावभासकत्वं नास्ति; तस्यैव तु वृत्त्यारूढस्य तदस्तीत्यत्र

लाग्न्यदाह्यस्यापि तृणादेरयःपिण्डसमारूढाग्निदाह्यत्ववत्केवलजीवचैतन्याप्रकाश्यस्यापि घटादेरन्तःकरणवृत्त्युपारूढतत्प्रकाश्यत्वं युक्तम् । यद्वान्तःकरणोपाधिकत्वेन जीवः परिच्छिन्नः । अतः संसर्गाभावान्न घटादिकमवभासयति । वृत्तिद्वारा तत्तत्संसृष्टविषयावच्छिन्नब्रह्म-

---

दृष्टान्तमाह— केवलाग्नीति । तत्प्रकाश्यत्वमित्यत्र तत्पदं जीवचैतन्यपरम् । ननु जीवचैतन्यस्य विषयदेशे सतोऽपि विषयैः संसर्गाभावान्न तत्प्रकाशकत्वं वृत्त्या तयोः संसर्गलाभे च तत्प्रकाशकत्वमिति किमिति परिह्रियते, जीवचैतन्यस्य सर्वगतत्वेन सत्यपि विषयसंसर्गे बिम्बभूतब्रह्मचैतन्यवत्तस्यावृतत्वादेव न विषयप्रकाशकत्वमिति प्रतिपादनेनापि जीवस्य सर्वज्ञत्वप्रसङ्गादेः परिहारसंभवादिति चेत्, न । 'ब्रह्म न जानामि' इत्यनुभवबलात्तस्यावृतत्वेऽपि 'मां न जानामि' इत्यनुभवाभावेन जीवचैतन्यस्यावृतत्वासंभवादिति भावः । जीवचैतन्यस्यान्तःकरणोपाधिकतया परिच्छिन्नत्वपक्षे सर्वज्ञत्वापत्तिशङ्कैव नास्ति, तस्य विषयैः सह स्वतः संबन्धाभावेन वृत्तिं विना तत्प्रकाशकत्वासंभवादिति परिहारान्तरमाह—**यद्वेति** । अत इति । परिच्छिन्नत्वादित्यर्थः । **तत्संसृष्टेति** । वृत्तिद्वारा वृत्तिमदन्तःकरणसंसृष्टं यद्विषयावच्छिन्नब्रह्मचैतन्यं तस्यान्तःकरणोपाधिकजीवचैतन्येन सहाभेदाभिव्यक्तौ सत्यां स जीवस्तं विषयं प्रकाशयतीत्यर्थः । अविद्याप्रतिबिम्बो जीव इति प्रथमपक्षमेवाश्रित्य जीवस्योपादानत्वाभावेऽपि घटादि-

चैतन्याभेदाभिव्यक्तौ तु तं विषयं प्रकाशयति। अथ वा जीवः सर्वगतोऽप्यविद्यावृतत्वात्स्वयमप्यप्रकाशमानतया विषयाननवभासयन्विषयविशेषे वृत्त्युपरागादावावरणतिरोधानेन तत्रैवाभिव्यक्तस्तमेव विषयं प्रकाशयति। एवं

---

विषयैः सह संसर्गमभ्युपेत्य परिहारमाह— **अथ वेति** । **सर्वगतोऽपीति** । उपलक्षणं चैतत् । विषयसंसृष्टोऽपीत्यपि द्रष्टव्यम्, इतरथा विषयसंसर्गाभावादेव जीवस्य विषयप्रकाशकत्वाभावोपपत्तौ तस्यावृतत्वकल्पनावैयर्थ्यप्रसङ्गादिति बोध्यम् । न च 'मां न जानामि' इत्यनुभवाभावात्कथं तस्यावृतत्वं सिध्येदिति वाच्यम् । अन्तःकरणोपहितजीवचैतन्यस्यैव 'माम्' इत्यनुभवविषयतया व्यापकजीवचैतन्येऽन्तःकरणावच्छेदेन तदभावेऽपि विषयदेशे तस्यावृतत्वकल्पने बाधकाभावात् 'सर्वगतत्वेन रूपेण मां न जानामि' इत्यनुभवसत्त्वाच्चेति भावः । **स्वयमपीति** । विषयास्तावज्जडत्वात्स्वतो न प्रकाशन्ते, जीवस्तु स्वप्रकाशतया प्रकाशमानोऽप्यावृतत्वादप्रकाशमान इति वक्तुमपिशब्दः । यद्वा अपिशब्दोऽवधारणार्थः । तथा चावृतत्वात्स्वयमेवाप्रकाशमानतयेत्यर्थः । **वृत्त्युपरागादाविति** । विषयविशेषे वृत्त्युपरागे सति विषयदेशस्थजीवचैतन्यस्यापि वृत्त्युपरागो भवति । तेन च जीवचैतन्यगतस्यावरणस्य तिरोधानं भवति । तथा च जीवचैतन्ये यो वृत्त्युपरागः स आदिपदार्थः । **तत्रैवेति** । विषयविशेष एवेत्यर्थः । **तमेवेति** । नान्यं विषयम्, अतो न

च चिदुपरागार्थत्वेन वा विषयचैतन्याभेदाभिव्यक्त्यर्थत्वेन वावरणाभिभवार्थत्वेन वा वृत्तिनिर्गमनमपेक्ष्य तत्संसृष्टविषयमात्रावभासकत्वाज्जीवस्य किंचिज्ज्ञत्वमप्युपपद्यत इति ॥

अत्र प्रथमपक्षे सर्वगतस्य जीवस्य वृत्त्यधीनः को विषयोपरागः; वृत्त्यापि हि पूर्वसिद्धयोर्निष्क्रिययो-

---

सर्वज्ञत्वप्रसङ्ग इति भावः । इममेव भावं प्रकटयति— एवं चेति । जीवचैतन्यस्य वृत्तिं विना विषयानवभासकत्वे सिद्धे सतीत्यर्थः । तत्संसृष्टेति । वृत्तिसंसृष्टेत्यर्थः । किंचिज्ज्ञत्वमपीति । अनुभवसिद्धं किंचिज्ज्ञत्वमनुभवसिद्धः सर्वज्ञत्वाभावः । तत्सिद्धं चक्षुराद्यनुविधानं चेत्यपिशब्दार्थः ॥

आक्षिपति— अत्रेति । उक्तपक्षेषु मध्य इत्यर्थः । क इति । स्वरूपलक्षणो वा तादात्म्यलक्षणो वा संयोगलक्षणो वेति किंशब्दार्थः । तत्र न तावदाद्यो वृत्त्यधीनः, जीवचैतन्यस्य सर्वगतत्वेन विषयदेशसंनिहितजीवचैतन्यविषययोः स्वरूपात्मकसंबन्धस्य वृत्तिं विनापि सिद्धत्वादित्याशयेन सर्वगतस्येत्युक्तम् । द्वितीयतृतीयौ क्रमेण दूषयति— वृत्त्यापीति । लोके ययोः पदार्थयोस्तादात्म्यमनुभूयते तत्तयोरादित आरभ्यैवानुभूयते, न तु मध्य आगन्तुकमित्याशयेनाह— पूर्वसिद्धयोरिति । संयोगस्यान्यतरकर्मजत्वमुभयकर्मजत्वं वा वक्तव्यम्; तदुभयं प्रकृते न संभवतीत्याह—

विषयजीवचैतन्ययोस्तादात्म्यस्य संयोगस्य वा न संभवत्याधानम् । अत्र केचिदाहुर्विषयविषयिभावसंबन्ध एवेति ॥

अन्ये तु— विषयविषयिभावमात्रे नियामिका वृत्ति-

---

निष्क्रिययोरिति । न च सुवर्णादौ द्विविधकर्माभावेऽपि तेज-पार्थिवभागयो संयोगो दृष्ट इति वाच्यम् । तथा विषयजीवचैतन्ययोरादित आरभ्य संयोगाभ्युपगमे तस्य वृत्त्यधीनत्वप्रतिपादनविरोधादिति भाव । वृत्त्याप्याधान न संभवतीति संबन्धः । जीवचैतन्यस्यानुपादानतया निरवयवतया च विषयजीवचैतन्ययोस्तादात्म्यसंयोगौ स्वतो न स्त एव; वृत्त्यापि तयोराधानं न संभवतीत्यपिशब्दार्थः । आधानमुत्पादनमिति बोध्यम् । विषय देशे संनिहितस्य जीवचैतन्यस्य वृत्त्युत्पत्ते. पूर्व विषयविषयिभावलक्षण. संबन्धो मा भूत् । तदुत्पत्त्यनन्तर स जायते, तस्यातिरिक्तस्यानिर्वचनीयस्य संभवादित्याशयेनाह— अत्र केचिदाहुरिति । न तु स्वरूपसंबन्धस्य वा तादात्म्यस्य वा संयोगस्य वा वृत्त्यधीनत्वमुपेयते येनोक्तदोष स्यादित्येवकारार्थ ॥

परोक्षस्थलेऽनुमित्यादिवृत्त्युपहितजीवचैतन्यस्यानुमेयादिविषयै. सह विषयविषयिभावलक्षणसंबन्धस्य वृत्तिनिर्गमन विनापि सिद्धान्ते स्वीकाराद्वृत्तिनिर्गमनमुपगच्छता विवरणकाराणामय संबन्धो नाभिप्रेत इत्याह— विषयविषयिभावमात्र इति । परोक्षस्थल-

श्चेदनिर्गताया अप्यैन्द्रियिकवृत्तेस्तन्नियामकत्वं नातिप्रसङ्गावहमिति तन्निर्गमाभ्युपगमवैयर्थ्यापत्तेः स नाभिसंहितः । किं तु विषयसंनिहितजीवचैतन्यतादात्म्यापन्नाया वृत्तेर्विषयसंयोगे तस्यापि तद्द्वारकः परम्परासंबन्धो लभ्यत इति स एव चिदुपरागोऽभिसंहित इत्याहुः ॥

---

साधारणविषयविषयिभाव एवेत्यर्थ । तन्नियामकत्वमिति । विषयविषयिभावसंबन्धस्तच्छब्दार्थः । वृत्तिनिर्गमनाभावेऽपि यद्विषया वृत्तिर्जीवस्य स एव तस्य प्रकाश्यो नान्य इति नियमसिद्धेर्विषयान्तरप्रकाशकत्वापत्तिरूपातिप्रसङ्गो नास्तीत्यर्थः । संयोगादेरपि निरस्तत्वात् कः संबन्धस्तदभिमत इति पृच्छति—किं त्विति । अभिमतं संबन्धमाह—विषयसंनिहितेति । विषयव्यापितयोत्पन्ना वृत्तिं प्रति विषयसंनिहितजीवचैतन्यस्याधिष्ठानतया वृत्तेस्तत्तादात्म्यं बोध्यम् । तस्यापीति । विषयसंनिहितजीवचैतन्यस्यापि विषयावभासकत्वेनाभिमतस्य विषयेण सह वृत्तिविषयसंयोगद्वारकः परम्परासंबन्धो विषयसंयुक्तवृत्तितादात्म्यलक्षणो लभ्यत इत्यर्थ । उक्तसंबन्धस्य वृत्तिनिर्गमनं विनासंभवात्तन्निर्गमनं विवरणाचार्यैरुक्तमिति भावः ॥

सुखादेरान्तरपदार्थस्यापरोक्षत्वे तत्प्रकाशकजीवचैतन्येन सह तस्य साक्षात्संबन्धः प्रयोजकत्वेन क्लृप्तः । एवं बाह्यघटादीनां-

अपरे तु— साक्षादपरोक्षचैतन्यसंसर्गेणैव सुखादेरापरोक्ष्यदर्शनादपरोक्षविषये साक्षात्संसर्ग एष्टव्यः । तस्माद्वृत्तेर्विषयसंयोगे वृत्तिरूपावच्छेदकलाभात्तदवच्छेदेन तदुपादानस्य जीवस्यापि संयोगजसंयोगः संभवति,

---

मापरोक्ष्येऽपि साक्षात्संबन्ध एषितव्यः; अन्यथा विषयापरोक्ष्ये क्वचित्साक्षात्संबन्धः क्वचित्परम्परासंबन्ध प्रयोजक इति वैरूप्यापत्तेः, संभवति साक्षात्संबन्धे परम्परासंबन्धकल्पनायोगाच्च । तस्मान्नायमप्याचार्याभिमतः संबन्ध इत्याह— अपरे त्विति । तस्मादिति । परम्परासंबन्धस्यानभिमतत्वादित्यर्थः । वृत्तेरिति । वृत्तेर्विषयेण संयोगे सति वृत्त्युपादानजीवचैतन्यस्यापि विषयेण सह संयोगजसंयोग. संभवति । एतदुक्तं भवति— जीवचैतन्यस्य वृत्तिः कार्यम्, अकार्यं विषय. । वृत्तेर्जीवचैतन्यमुपादानकारणम् । तस्या वृत्तेर्विषयो नोपादानकारणम् । तथा च वृत्तिविषययोर्जीवचैतन्यं प्रति कार्याकार्ययोः संयोगाज्जीवचैतन्यविषययोर्वृत्तिं प्रति कारणाकारणयोः संयोगोऽत्र संयोगजसंयोगो विवक्षित इति । ननु काय प्रति कारणभूतहस्तस्य त प्रत्येवाकारणभूततरुणा संयोगाद्धस्तकार्यकायस्य हस्ताकार्यतरुणा सह संयोग उपेयते, हस्ततरुसंयोगदशायाम् 'तरौ हस्तावच्छेदेन तरुः कायसंयुक्तः' इत्यनुभवसिद्धत्वादित्याशङ्क्य प्रकृतेऽपि घटादौ विषये वृत्तिसंयोगदशायाम् 'घटे वृत्त्यवच्छेदेन घटः स्फुरति'

**कारणाकारणसंयोगात्कार्याकार्यसंयोगवत्तु कार्याकार्यसंयोगात्कारणाकारणसंयोगस्यापि युक्तितौल्येनाभ्युपगन्तुं युक्तत्वादित्याहुः ॥**

**एकदेशिनस्तु— अन्तःकरणोपहितस्य विषयावभासकचैतन्यस्य विषयतादात्म्यापन्नब्रह्मचैतन्याभेदाभि-**

---

इति जीवचैतन्यमसृष्टत्वानुभवादित्याशयेनाह— **कारणाकारणेति** । **युक्तितौल्येनेति** । उभयत्र कल्पकानुभवरूपाया युक्तेस्तुल्यत्वेनेत्यर्थः ॥

ननु विषयदेशे सन्निहितस्यापि जीवचैतन्यस्य वृत्त्युपादानत्वं विवरणाचार्याणामभिमतं न भवति, जीवस्यान्तःकरणाद्युपादानत्वाभावेऽपि सास्नादिमद्व्यक्तौ गोत्वसामान्यस्येव स्वभावादेव जीवस्यान्तःकरणादौ संबन्ध इत्यस्यार्थस्य 'एवं विषयान्तरासङ्ग्यपि जीवः स्वभावादन्तःकरणे संसृज्यते' इत्यत्र प्राग्विवरणमतत्वेन प्रतिपादितत्वात् । ततश्च जीवचैतन्यस्य वृत्तिं प्रत्युपादानकारणत्वाभावे सत्युक्तसंबन्धो न सिध्यतीति संयोगजसंयोगोऽपि नाचार्यसंमत इत्यस्वरसादाह— **एकदेशिनस्त्विति** । घटादिविषयावभासकजीवचैतन्यस्य घटादिना विषयेण सह तादात्म्यसंबन्धसंपादनमेव चिदुपरागत्वेनाभिमतमित्यर्थः । ननु वृत्त्यापि पूर्वसिद्धयोर्विषयचैतन्ययोस्तादात्म्यस्य न संभवत्याधानमिति प्रागुक्तत्वात्कथं तत्संपादनम्, अत आह — **विषयतादात्म्यापन्नेति** ।

**व्यक्तिद्वारा विषयतादात्म्यसंपादनमेव चिदुपरागोऽभिसंहितः, सर्वगततया सर्वविषयसंनिहितस्यापि जीवस्य तेन रूपेण विषयावभासकत्वे तस्य साधारणतया पुरुषविशेषापरोक्ष्यव्यवस्थित्ययोगेन तस्यान्तःकरणोपहितस्वरूपेणैव विषयावभासकत्वात् । एवं च विषयापरोक्ष्य**

---

बिम्बभूतब्रह्मचैतन्यस्य घटादिविषयोपादानतया ब्रह्मविषययोस्तादात्म्यं प्रागेव सिद्धम् । तथा च विषयतादात्म्यापन्नब्रह्मचैतन्येन सह विषयावभासकजीवचैतन्यस्य वृत्तिकृताभेदाभिव्यक्तौ सत्यां जीवचैतन्यस्य विषयतादात्म्य वृत्त्यधीनतया लभ्यते । अभेदाभिव्यक्तिप्रकारश्च वक्ष्यते । अतो न तादात्म्यसंपादनानुपपत्तिरिति भावः । विषयावभासकजीवचैतन्यस्यान्तःकरणोपहितस्येति यद्विशेषणं तस्य प्रयोजनमाह— **सर्वगततयेति । तेनेति ।** सर्वगतत्वेनेत्यर्थः । **तस्येति ।** जीवस्येत्यर्थः । **साधारणतयेति ।** सर्वपुरुषसाधारणतयेत्यर्थः । पुरुषपदं प्रमातृपरम् । अविद्याप्रतिबिम्बो जीव इति पक्षे जीवभेदाभावात् । **अयोगेन तस्येति ।** जीवस्येत्यर्थः । तथा च सर्वगतमपि जीवचैतन्यं यस्य पुरुषस्यान्तःकरणोपहितं सद्यमर्थमवभासयति सोऽर्थस्तस्यैवापरोक्षो नान्यस्येति व्यवस्थितिसिद्धयेऽन्तःकरणोपहितत्वविशेषणं वाच्यमित्यर्थः । एकदेशिमते लाभमाह— **एवं चेति ।** विषयावभासकजीवचैतन्यस्य वृत्त्या विषयतादात्म्यसंपादनोपगमे सतीत्यर्थः ।

आध्यासिकसंबन्धो नियामक इति सिद्धान्तोऽपि संगच्छते । न चैवं द्वितीयपक्षसांकर्यम्, जीवस्य सर्वगतत्वे प्रथमः पक्षः परिच्छिन्नत्वे द्वितीय इत्येव तयोर्भेदादित्याहुः ॥

---

आध्यासिकेति । अध्याससिद्धतादात्म्यसबन्ध इत्यर्थः । न चैवमिति । सबन्धार्थां वृत्तिरिति प्रथमपक्षेऽपि वृत्त्याभेदाभिव्यक्त्युपगम इत्यर्थः । साकर्यं परिहरति— जीवस्येति । जीवस्य सर्वगतत्वमते संबन्धार्था वृत्तिरिति प्रथमः पक्षः, जीवस्यान्तःकरणोपाधिकतया परिच्छिन्नत्वमतेऽभेदाभिव्यक्त्यर्था वृत्तिरिति द्वितीयः पक्ष इत्यर्थः । अय भावः— प्रथमद्वितीयपक्षयोरुभयोर्वृत्तिकृताभेदाभिव्यक्तिसाम्येऽपि प्रथमपक्षे वृत्तिरभेदाभिव्यक्तिद्वारा विषयावभासकजीवचैतन्यस्य विषयेण सह तादात्म्यसंबन्धसंपादनार्था; द्वितीयपक्षे तु वृत्तिर्विषयावभासकजीवचैतन्यस्य विषयावच्छिन्नजीवचैतन्येनाभेदाभिव्यक्त्यर्थैवेति न तयोः सांकर्यमिति । यद्वा प्रथमपक्षे जीवस्य व्यापकतया विषयदेशे सदा संनिहितस्यैव विषयावभासकजीवचैतन्यस्य विषयतादात्म्यापन्नब्रह्मचैतन्याभेदाभिव्यक्त्यर्था वृत्तिः; द्वितीयपक्षे तु जीवस्य परिच्छिन्नतया वृत्तिस्तस्य विषयसंनिधिं संपाद्य विषयाधिष्ठानब्रह्मचैतन्याभेदाभिव्यक्तिमपि संपादयतीति तयोः पक्षयोरसांकर्यम् । अय परिहारो मूले सर्वगतत्वपरिच्छिन्नत्वपदाभ्यां सूचितः । पूर्वपरिहार-

स्तु प्रथमपक्षद्वितीयपक्षपदाभ्यां सूचितः । संबन्धार्था वृत्तिरिति प्रथमपक्षे संबन्धस्योद्देश्यत्वावगमात्, अभेदाभिव्यक्त्यर्था वृत्ति-रिति द्वितीयपक्षेऽभेदाभिव्यक्तेरेवोद्देश्यत्वावगमादिति । अत्र मते विवक्षितविवेकेन वृत्तेरभेदाभिव्यक्तिरेव प्रयोजनं प्रथमद्वितीयप-क्षयोः पर्यवस्यतीति तयोः सांकर्यं दुर्वारमित्यभिप्रेत्यादावेवैकदे-शिन इत्युक्तमिति मन्तव्यम् । वस्तुतस्तु संबन्धार्था वृत्तिरिति वदतामाचार्याणामयमभिप्रायः— विषयावभासकत्वेनाभिमतस्य जीवचैतन्यस्य विषयेण घटादिना सह व्यङ्ग्यव्यञ्जकतालक्षणः संबन्धस्तत्तद्विषयसंसृष्टवृत्त्यधीनोऽत्र विवक्षितः । तथा हि— अन्तःकरणं स्वच्छद्रव्यत्वात्स्वत एव चैतन्याभिव्यञ्जनसमर्थम् । घटादिकं तु तथा न भवति, अस्वच्छद्रव्यत्वात् । घटादिविषय-व्याप्तया तु वृत्त्या तत्र विद्यमानमस्वाच्छ्यमभिभूय चैतन्याभि-व्यञ्जनयोग्यताधीयते । तदुक्तं विवरणाचार्यैरेव— 'अन्तःकरणं हि स्वस्मिन्निव स्वसंसर्गिण्यपि घटादौ चैतन्याभिव्यक्तियोग्यता-मापादयति' इति । दृष्टं चास्वच्छस्यापि स्वच्छद्रव्यसंसर्गा-त्प्रतिबिम्बग्राहित्वयोग्यत्वम्, यथा कुड्यादेर्जलसंयोगकाले प्रति-बिम्बग्राहित्वम् । घटादेः स्वसंनिहितजीवचैतन्यव्यञ्जकत्वं च तत्प्रतिबिम्बग्राहित्वम् । चैतन्यस्यापि व्यङ्ग्यत्वं तत्र प्रतिबिम्बि-तत्वमेव । एवंविधव्यङ्ग्यव्यञ्जकतालक्षणसंबन्धार्थमेव वृत्तेर्निर्ग-मनमुक्तं विवरणे । तथा च वृत्त्या बहिर्निर्गतया विषयचैतन्ययो-र्यथोक्तसंबन्धे संपादिते सति घटादौ प्रतिबिम्बितं तत्रत्यजीवचै-तन्यं तमवभासयतीति ॥

**अथ द्वितीयपक्षे कथमभेदाभिव्यक्तिः । केचिदाहुः—कुल्याद्वारा तडागकेदारसलिलयोरिव विषयान्तःकरणावच्छिन्नचैतन्ययोर्वृत्तिद्वारैकीभावोऽभेदाभिव्यक्तिः ।**

---

द्वितीयपक्षमाक्षिपति— **अथेति** । **कथमिति** । अभेदाभिव्यक्त्यर्था वृत्तिरिति द्वितीयपक्षो हि जीवस्य परिच्छिन्नत्वमत इत्युक्तम् । अस्मिन्मतेऽन्तःकरणोपाधिकस्य जीवस्य विषयावच्छिन्नबिम्बभूतब्रह्मचैतन्यस्य च वृत्त्याभेदाभिव्यक्तिर्न संभवति, अखण्डाकारवृत्तेरिव घटादिगोचरवृत्तेरुपाधिनिवर्तकत्वाभावेन भेदकोपाध्योरन्तःकरणविषययोः सतोर्जीवब्रह्माभेदाभिव्यक्तेरयोगादित्यर्थः । निवर्तकोपाध्यो सत्त्वेऽपि तयोरेकदेशस्थत्वसंपत्तौ तद्बलादभेदाभिव्यक्ति संभवति, लोके तथा दर्शनादिति परिहरति— **केचिदाहुरिति** । केदारः सस्यनिष्पत्तिस्थानम् । तथा च तडागस्थसलिलस्य कुल्याद्वारा केदारस्थसलिलस्य चाभेदाभिव्यक्तिर्यथा लोके प्रसिद्धा, तथान्तःकरणावच्छिन्नचैतन्यरूपजीवस्य विषयावच्छिन्नब्रह्मचैतन्यस्य च वृत्तिद्वाराभेदाभिव्यक्तिर्भवति, वृत्तेर्विषयदेशस्थत्वे सति वृत्तिवृत्तिमतोरभेदेन जीवोपाध्यन्तःकरणस्यापि विषयदेशस्थत्वसिद्धेरित्यर्थः । ननु जीवचैतन्यस्य विषयावभासकत्वं न संभवति, तस्य विषयं प्रत्युपादानत्वाभावेन तादात्म्यसंबन्धाभावात् । न च ब्रह्मचैतन्यमेव विषयावभासकमस्तु, तस्योपादानतया साक्षादेव तादात्म्यसंबन्धलाभादिति वाच्यम् । तथा सति 'आलोकेन घटः प्रकाशितः'

**एवं च यद्यपि विषयावच्छिन्नं ब्रह्मचैतन्यमेव विषयप्रकाशकम्, तथापि तस्य वृत्तिद्वारैकीभावेन जीवत्वं संपन्नमिति जीवस्य विषयप्रकाशोपपत्तिरिति ॥**

**अन्ये त्वाहुः— बिम्बस्थानीयस्य विषयावच्छिन्नस्य ब्रह्मणः प्रतिबिम्बभूतेन जीवेनैकीभावो नाभेदाभिव्यक्तिः, व्यावर्तकोपाधौ दर्पण इव जाग्रति तयोरेकीभावा-**

---

इतिवत् 'मया घटोऽवगतः' इति जीवचैतन्यस्यैव घटप्रकाशकत्वावगमविरोधादिति मत्वा पुन शङ्कते— **एवं चेति** । अभेदाभिव्यक्तौ संभावितायामित्यर्थः । अभेदाभिव्यक्तिप्रयोजन वक्तु **यद्यपीति** । **विषयप्रकाशकमिति** । इति वक्तव्यं तादात्म्यसबन्धलाभादिति शेषः । न जीवचैतन्यमित्येवकारार्थः । तथा च 'मयायमवगतो घटः' इत्यनुभवविरोध इति भावः । परिहरति— **तथापीति** । **तस्येति** । तादात्म्यसंबन्धेन विषयावभासकब्रह्मचैतन्यस्य वृत्तिद्वारान्तःकरणोपहितत्वप्राप्तौ जीवेनैकीभावाज्जीवत्व संपन्नमिति ब्रह्मचैतन्यस्य यद्विषयावभासकत्वं तज्जीवस्यैवेति प्राप्त्या नानुभवविरोध इत्यर्थः ॥

**दर्पण इवेति** । दर्पणे प्रतिबिम्बदशायां बिम्बप्रतिबिम्बयोरभेदाभिव्यक्तिर्नास्ति, तयोस्तदा भेदानुभवात्, तथा प्रकृतेऽपि विषयादिरूपभेदकोपाधौ सति सा न संभवतीत्यर्थः । ननु

**योगाद्वृत्तिकृताभेदाभिव्यक्त्या विषयावच्छिन्नस्य ब्रह्मणो जीवत्वप्राप्तौ ब्रह्मणस्तदा तद्विषयसंसर्गाभावेन तद्द्रष्ट्-**

---

तत्त्वसाक्षात्कारेणाशेषोपाधिनिवृत्तौ यादृश्यभेदाभिव्यक्तिस्तादृश्यत्र न विवक्षिता । किं तु क्षीरनीरयोरेकपात्रस्थयोरिव वृत्तिद्वारान्तःकरणविषययोरेकदेशस्थत्वप्राप्तौ तन्मात्रप्रयुक्ता तदवच्छिन्नचैतन्ययोरौपचारिक्यभेदाभिव्यक्तिर्विवक्षिता । अस्यां चाभेदाभिव्यक्तौ न व्यावर्तकोपाधिसत्त्वप्रयुक्तो विरोधोऽस्ति, दर्पणे मुखप्रतिबिम्बदशायामपि 'मम मुखमेव दर्पणे भाति' इति बिम्बप्रतिबिम्बयोरभेदाभिव्यक्तिदर्शनात् । अस्मिन्मतेऽपीत्थमेव निर्वाहः कर्तव्यः । न ह्यन्तःकरणतद्वृत्तिप्रतिबिम्बयोरभेदाभिव्यक्तिर्मुख्या संभवति, वृत्तिवृत्तिमतोः कार्यकारणभावापन्नयोरैक्यायोगेन तत्प्रतिबिम्बयोरैक्यायोगात्. ऐक्ये वा 'एवं च' इत्यादिना प्रमात्रादीनामस्मिन्मते साङ्कर्याभावोपपादनविरोधादित्यस्वरसादाह— **वृत्तिकृताभेदाभिव्यक्त्येति** । तदा **तद्विषयेति** । विषयावच्छिन्नब्रह्मणो जीवत्वप्राप्तौ तस्येश्वरत्वनिवृत्तिरवश्यं वाच्या, एकचैतन्य एकावच्छेदेन जीवत्वेश्वरत्वयोरसंभवात् । तथा च तदा जीवत्वदशायां ब्रह्मणस्तद्विषयसंसर्गाभावेन तद्द्रष्टृत्वं न संभवतीत्यर्थः । तस्येत्यनन्तरं तदेत्यनुषङ्गः । ननु विषयाधिष्ठानचैतन्यस्य वृत्तिसंसर्गदशायामन्तःकरणोपहितत्वप्रयुक्तजीवत्ववदविद्योपहितत्वप्रयुक्तमीश्वरत्वमप्यविरुद्धम् । तथा च बिम्बभूतेश्वरस्य तदापि सर्वज्ञत्वमक्षतम् । अन्यथान्तःकरणाद्यधिष्ठानचैतन्यस्य तदुपाधिकत्वप्रयु-

**न्यरूपनित्यसाक्षिभास्यत्वपक्षः, तयोरपि चैतन्यस्य स्वसंसृष्टापरोक्षरूपत्वाद्वृत्तिसंसर्गोऽवश्यं वाच्य इति तत्संसृष्टानित्यरूपसद्भावान्न तेषु संस्काराधाने काचिदनुपपत्तिरिति ॥**

---

वृत्तीनामनवच्छिन्नसाक्षिभास्यत्वोक्तिविरोधप्रसङ्गात् । अतः कथ तयोः पक्षयोस्तदाधानम्, अत आह— **तयोरपीति** । विषयावच्छिन्नब्रह्मचैतन्यस्य ज्ञाततावभासकत्वमते तद्ब्रह्मचैतन्य ज्ञातताया अपरोक्षज्ञानरूपमेवोपेयते, 'ज्ञातोऽयं घटः' इति ज्ञातताया अपरोक्षत्वानुभवात् । अनवच्छिन्नशुद्धचैतन्यमपीच्छाज्ञानादीनामपरोक्षज्ञानरूपमेवोपेयते, इच्छादिवृत्तीनामप्यपरोक्षत्वानुभवात् । तथा चापरोक्षज्ञानरूपद्विविधचैतन्यस्य स्वविषयभूतैर्ज्ञानेच्छादिभिः संसर्गोऽवश्यंभावी, अपरोक्षज्ञानस्य स्वतादात्म्यापन्नविषयानुभवरूपत्वनियमात् । ततश्च स्वविषयभूतज्ञानेच्छादिनाशसमये ज्ञानादिविशिष्टरूपेण द्विविधचैतन्यस्यापि नाशलक्षणसंस्कारोपपत्तिरित्यर्थः । तयोरपीति सप्तमी । **चैतन्यस्येति** । द्विविधस्येति शेषः । तत्पदं ज्ञानेच्छादिरूपवृत्तिपरम् ॥

यदि च स्वगोचरवृत्त्यैव स्वसंस्काराधानमवश्यं वाच्यं तदापि नानुपपत्तिः, अविद्यावृत्तिभिरहंकारतद्धर्मगोचराभिरहकारादिषु सस्काराधानसभवात् । न च वृत्तिगोचरवृत्त्युपगमे प्रागुक्ता-

**अन्ये तु सुषुप्तावविद्याद्यनुसंधानसिद्धये कल्पिता-मविद्यावृत्तिमहमाकारामङ्गीकृत्याहमर्थे संस्कारमुपपाद-**

---

नवस्थाप्रसक्तिरिति वाच्यम् । अविद्यावृत्तीनामनुभवायोग्यत्वेन तासु ज्ञानाय संस्काराय वा ज्ञानेच्छाद्यनुभवकालेऽविद्यावृत्त्यन्तरा-नभ्युपगमात् । न चाविद्यावृत्तीनामक्लृप्तसंस्कारजनकत्वकल्पने गौरवमिति वाच्यम् । सुषुप्तौ तासां तज्जनकत्वस्य क्लृप्तत्वादि-त्याशयेन मतान्तरमाह— **अन्ये त्विति** । उत्थितस्याविद्याद्यनु-संधानसिद्धये सुषुप्तौ कल्पितामविद्यादिगोचरामविद्यावृत्तिमिवाह-माकारामविद्यावृत्तिमङ्गीकृत्येति वाक्यं योजनीयम् । यथाश्रुते सुषुप्तौ यदविद्याद्यनुसंधानं तत्सिद्धय इति भ्रान्तिः स्यात्, संनिधानात् । तथा सुषुप्तौ कल्पिताया एवाविद्यावृत्तेरहमाकारत्व-मङ्गीकृतमिति भ्रान्तिः स्यादिति बोध्यम् । अविद्यादीत्यादिपदं सुखसुषुप्त्योः संग्रहार्थम् 'सुखमहमस्वाप्सम्, न किंचिदवे-दिषम्' इति सुषुप्तिकालीनानां सुखसुषुप्त्यविद्यानामुत्थाना-नन्तरमनुसंधानदर्शनात्तत्कालीनाविद्याद्यनुभवस्य नित्यसाक्षिरूप-तया तस्याविद्यावृत्तिरूपावच्छेदकाकल्पने संस्कारासंभवेनोक्तानु-संधानाभावप्रसङ्गात् । नन्वज्ञानाहंकारादिगोचराविद्यावृत्त्यु-पगमे तेषां केवलसाक्षिवेद्यत्वसिद्धान्तव्याकोप इति चेत्, न; अविद्यावृत्तीनां क्लृप्तज्ञानकारणजन्यत्वाभावेन ज्ञानात्मकवृत्ति-त्वाभावाज्ज्ञानात्मकवृत्त्यनुपहितसाक्षिण एव केवलसाक्षिशब्दार्थ-त्वाङ्गीकारादिति भावः । अहमर्थग्रहणं तद्धर्माणामप्युपलक्षणम्,

**यन्ति । न चास्मिन्पक्षे 'एतावन्तं कालमिदमहं पश्य-न्नेवासम्' इत्यन्यज्ञानधाराकालीनाहमर्थानुसंधानानुप-पत्तिः, अवच्छेदकभेदेन सुखदुःखयोर्यौगपद्यवद्वृत्तिद्वय-यौगपद्यस्याप्यविरोधेनान्यज्ञानधाराकालेऽप्यहमाकारा-विद्यावृत्तिसंतानसंभवात् ॥**

---

तुल्यन्यायतया बाधकाभावेन च तद्धर्मेष्वपि अविद्यावृत्तिभिः संस्कारस्योपपादितत्वादिति ध्येयम् । नन्वस्मिन्पक्षेऽन्यज्ञानधाराकालीनाहमर्थादिष्वहमर्थादिगोचराविद्यावृत्त्यसंभवेन संस्काराधानं न स्यात्, धाराकालेऽविद्यावृत्त्यङ्गीकारे युगपद्वृत्तिद्वयप्रसङ्गादिति शङ्कामनूद्य दृष्टान्तेन परिहरति— **न चास्मिन्पक्ष इति**। अविद्यावृत्तिभिः संस्काराधानपक्ष इत्यर्थः। **अवच्छेदकभेदेने-ति**। 'शिरसि मे वेदना' 'पादे मे सुखम्' इत्यनुभवदर्शना-दिति भावः । **वृत्तिद्वयेति** । अन्यज्ञानधाराकालेऽप्यन्यवस्तु-गोचरान्तःकरणवृत्तेरहमर्थगोचराविद्यावृत्तेश्च युगपत्प्रमातर्यवच्छे-दकभेदेन संभवो न विरुध्यत इत्यर्थः । नन्वन्यज्ञानधाराकाले एकै-वाविद्यावृत्तिरिति वक्तुं शक्यते, तदा तन्नानात्वे मानाभावाल्लाघवाच्चेति चेत्, सत्यम् । तथाप्यन्तःकरणवृत्तिसंततिरूपत्वाद्धारायास्तत्कालीनाविद्यावृत्तेरपि संततिरूपत्वं संभवतीति संभावनामात्रेण तथोक्तम् । अत एवाह—**संतानसंभवादिति** ।

अहमर्थांशेऽन्तःकरणवृत्त्यैव संस्काराधानं संभवतीति न तदंशे-

अपरे तु— अहमाकारा वृत्तिरन्तःकरणवृत्तिरेव । किं तूपासनादिवृत्तिवन्न ज्ञानम्, क्लृप्तज्ञानकरणाजन्यत्वात् । न हि तत्र चक्षुरादिकं करणं संभवति । न वा लिङ्गादिकम्, लिङ्गादिप्रतिसंधानशून्यस्याप्यहंकारानुसंधानदर्शनात् । नापि मनः करणम्, तस्योपादानभूतस्य क्वचिदपि करणत्वाक्लृप्तेः । तर्ह्यहमर्थप्रत्यभिज्ञापि ज्ञानं न स्यादिति चेत्, न । तस्या

---

ऽप्यविद्यावृत्तिः कल्पनीया, अन्तःकरणवृत्तिसंभवे तत्कल्पनायोगात् । न चान्यज्ञानधाराकालेऽहमर्थगोचरान्तःकरणवृत्तिर्न संभवति, सुखदुःखयौगपद्यवज्ज्ञानद्वययौगपद्यायोगादिति वाच्यम् । संस्कारार्थाहंवृत्तेर्ज्ञानरूपत्वानुपगमादिति मतमाह— अपरे त्विति । तर्हि सा वृत्तिर्घटादिवृत्तिवज्ज्ञानरूपापि स्यात् । तथा च ज्ञानात्मकवृत्त्युपहितसाक्षिवेद्यत्वापत्त्याहमर्थस्य केवलसाक्षिभास्यत्वसिद्धान्तहानिरित्याशयेन शङ्कते— किं त्विति । परिहरति— उपासनादीति । इच्छादिसंग्रहार्थमादिपदम् । अनुसंधानमनुभवः । क्वचिदपीति । वृत्तिज्ञानं प्रत्युपादानभूतस्यान्तःकरणस्याहमाकारवृत्तेः सकाशादन्यत्र क्वचिदपि वृत्तौ तस्य करणत्वाक्लृप्तेरित्यर्थः । तर्हीति । "योऽहं स्वप्ने साक्षाद्भगवन्तं श्रीकृष्णमन्वभूवं सोऽहमिदानीं तं स्मरामि" इति प्रत्यभिज्ञाहमर्थांशे ज्ञानं न स्यात्, ज्ञानकरणाजन्यत्वादित्यर्थः । इष्टापत्त्या परि-

**अहमंशे ज्ञानत्वाभावेऽपि तत्तांशे स्मृतिकरणत्वेन क्लृप्तसंस्कारजन्यतया ज्ञानत्वादंशभेदेन ज्ञाने परोक्षत्वा-परोक्षत्ववत्प्रमात्वाप्रमात्ववच्च ज्ञानत्वाज्ञानत्वयोरप्यवि-रोधादित्याहुः ॥**

**इतरे तु— अहमाकारापि वृत्तिर्ज्ञानमेव, 'मामहं**

---

हरति— नेति । तर्हि प्रत्यभिज्ञानं तत्तांशेऽपि ज्ञानं न स्यात्, एकस्यां प्रत्यभिज्ञायां ज्ञानत्वतदभावयोर्विरोधेनायोगादित्यत आह– **तस्या इति** । प्रत्यभिज्ञाया इत्यर्थः । **अंशभेदेनेति** । विषयैक-देशोऽत्रांशः । स च प्रागेव दर्शित— अहमंश इति तत्तांश इति च । **परोक्षत्वेति** । 'पर्वतो वह्निमान्' इत्यनुमितेः सिद्धा-न्ते वह्न्यंशे परोक्षत्वं, संनिकृष्टपर्वतांशे त्वपरोक्षत्वमुपेयते । मत-द्वयसंमतं दृष्टान्तमाह— **प्रमात्वेति** ॥

पूर्वोपदर्शितप्रत्यभिज्ञाया अहमर्थांशेऽपि ज्ञानत्वमुपेयम् । अ-न्यथा हि प्रत्यभिज्ञाप्रामाण्येनान्तःकरणोपहितचैतन्यरूपस्य जी-वस्याहमर्थस्य स्थायित्वसाधन सूत्रभाष्ययोर्दृश्यमान विरुध्येत । तथा च सूत्रम्— 'अनुस्मृतेश्च' इति । अनुस्मृतिः प्रत्यभिज्ञा । तथा च तत्सूत्रस्य भाष्यम्— 'य एवाह पूर्वेद्युरद्राक्ष स एवाह-मद्य स्मरामि' इति । तथा च प्रत्यभिज्ञाया अहमंशे ज्ञानत्वाभा-वाभिधानमयुक्तमिति मन्यमानानां मतमाह— **इतरे त्विति** । **अनुभवादिति** । अहमर्थगोचरवृत्तौ ज्ञानत्वानुभवादित्यर्थः ।

**जानामि' इत्यनुभवात् । न च करणासंभवः, अनुभवानुसारेण मनस एवान्तरिन्द्रियत्वस्यैव करणत्वस्यापि कल्पनादित्याहुः । एवं सति बाह्यगोचरापरोक्षवृत्तीनामेवावरणाभिभावकत्वनियमः पर्यवसितः ॥**

---

**मनस इति** । अत एव वियत्पादे भाष्यम्— 'बुद्धेः करणत्वाभ्युपगमात्' इति । अत एव चाहंकारधर्माणां ज्ञानसुखादीनां केवलसाक्षिभास्यत्वेऽप्यहमर्थरूपस्य मनः प्रत्यक्षाधारणाविषयस्य सत्त्वात्तस्येन्द्रियत्वं प्राणपादे चक्षुरादीनामिव भाष्यकारैरेव व्यवस्थापितमिति मन्तव्यम् । केवलसाक्षिभास्यत्वसिद्धान्तोऽप्यत एवाहमर्थव्यतिरिक्तज्ञानसुखादिमात्रविषय इत्यपि मन्तव्यम् । ननु मनस इन्द्रियत्वपक्षे रूपादौ चक्षुरादेरिव तस्याहमर्थे प्रमाणत्वं वाच्यम् । तच्च न संभवति, अहमर्थस्यानावृतसाक्षिचैतन्येऽध्यस्तस्याज्ञातत्वाभावेन मनसोऽज्ञातज्ञापकत्वाभावादिति चेत्, न । 'तद्वति तत्प्रकारकानुभवत्वमबाधितानुभवत्वं वा प्रमात्वम्' इति मतानुरोधेनाहमाकारज्ञानस्य प्रमात्वोपपत्तौ तत्करणस्य मनसोऽपि चक्षुरादीनामिव प्रमाणत्वसंभवादिति भावः । ननु तर्ह्यपरोक्षवृत्तीनामावरणाभिभावकत्वनियमस्याहमाकारापरोक्षवृत्तौ व्यभिचार इत्याशङ्क्य नियमस्य संकोचं दर्शयति— एवं सतीति । अहमाकारापरोक्षवृत्त्युपगमे सतीत्यर्थः । न त्वान्तराहमाकारवृत्तीनामपि, अहमर्थस्यानावृतत्वेन तासामावरणाभिभावकत्वा-

ननु नायमपि नियमः, शुक्तिरजतस्थल इदमाकारवृत्तेरज्ञानानभिभावकत्वादन्यथोपादानाभावेन रजतोत्पत्त्ययोगादिति चेत् ॥

अत्राहुः— इदमाकारवृत्त्येदमंशाज्ञाननिवृत्तावपि शुक्तित्वादिविशेषांशाज्ञानानिवृत्तेस्तदेव रजतोपादानम्,

---

संभवादित्येवकाराभिप्रायः ॥

उक्तनियममप्याक्षिपति— नन्विति । 'इद रजतम्' इति भ्रमस्थले प्रथममिदमाकारापरोक्षवृत्तिरुदेति । पश्चात् 'इद रजतम्' इति भ्रमो भवति । तत्रेदमाकारायाः प्रथमोत्पन्नवृत्तेरज्ञाननिवर्तकत्व किं नास्ति, उतास्ति । आद्ये नियमस्य व्यभिचारमाह— नायमपीति । यथा 'अपरोक्षवृत्तिमात्रमज्ञाननिवर्तकम्' इति नियमो नास्ति, अहमाकारवृत्तौ व्यभिचारात्; तथा 'बाह्यगोचरापरोक्षवृत्तिमात्रमज्ञाननिवर्तकम्' इति नियमोऽपि नास्ति, इदमाकारवृत्तौ व्यभिचारादित्यर्थः । द्वितीये बाधकमाह— अन्यथेति । इदमाकारवृत्तेरज्ञानाभिभावकत्व इत्यर्थः । इदमाकारवृत्तिनिवर्त्याज्ञानमन्यद्रजतोपादानभूताज्ञानमन्यत् । तथा च न व्यभिचारो न वा रजतोत्पत्त्ययोग इति परिहरति— अत्राहुरिति । शुक्तित्वादिविशेषांशावारकाज्ञानमेव रजतोपादानमित्यत्र मानमाह — शुक्तित्वाद्यज्ञान इति । नीलपृष्ठत्वादिकमादिपदार्थः । रजतमेवाध्यस्यत इत्यध्यासस्तस्येत्यर्थः । प्रथमतत्पदं विशेषांश-

शुक्तित्वाद्यज्ञाने रजताध्यासस्य तज्ज्ञाने च तदभावस्यानुभूयमानत्वात्, अध्यासभाष्यटीकाविवरणेऽनुभूयमानान्वयव्यतिरेकस्यैवाज्ञानस्य रजताद्यध्यासोपादानत्वोक्तेः। अत एव शुक्त्यंशोऽधिष्ठानमिदमंश आधारः; सविलासाज्ञानविषयोऽधिष्ठानम्, अतद्रूपोऽपि तद्रूपेणा-

---

परम् । द्वितीयतत्पदमध्यासपरम् । तत्र सम्मतिमाह— **अध्यासेति** । टीका पञ्चपादिका । अनुभूयमानावन्वयव्यतिरेकौ यस्येति विग्रहः । ननु पुरोवृत्तिद्रव्यस्य शुक्तित्वादिविशेषरूपविशिष्टस्यैव रजतकारणाज्ञानावृतत्वाभ्युपगमे तस्यैवाधिष्ठानत्वं स्यात् । न त्विदंत्वरूपविशिष्टस्येदमंशस्य, सविलासाज्ञानविषयस्यैवाधिष्ठानत्वात् । तथा चाधिष्ठानारोप्ययोरेकज्ञानविषयत्वनियमात् 'शुक्तौ रजतम्' इति भ्रमाकारः स्यात् । न स्याच्च 'इदं रजतम्' इति प्रतीत्याकार, इदमंशस्याधिष्ठानत्वाभावादित्यत आह— **अत एवेति** । अध्यासोपादानाज्ञानविषयत्वादेवेत्यर्थः । **शुक्त्यंश इति** । शुक्तित्वविशेषरूपेण पुरोवर्त्यवच्छिन्नचैतन्यमित्यर्थः । इदमंशस्याधिष्ठानत्वाभाव इष्ट इत्याशयेनाह— **इदमंश इति** । ननु तस्याधारत्व आगतमेवाधिष्ठानत्वं तयोर्भेदाभावादिति, नेत्याह— **सविलासेति** । विलासो रजतादिविक्षेपः । विषयत्वमात्रं तत्त्वम् । **अतद्रूपोऽपीति** । तत्पदमध्यस्तरजतादिपरम् । तथा चाध्यस्तरजताद्य-

**रोप्यबुद्धौ स्फुरंश्चाधार इति संक्षेपशारीरकेऽपि विवेच-
नादिति ॥**

**अपरे तु— 'इदं रजतम्' इतीदमंशसंभिन्नत्वेन प्रतीयमानस्य रजतस्येदमंशाज्ञानमेवोपादानम्। तस्य चेदमाकारवृत्त्यावरणशक्तिमात्रनिवृत्तावपि विक्षेपशक्त्या सह**

---

भेदरहितोऽपि तदभिन्नत्वेन स्फुरन्नित्यर्थः। अधिष्ठानस्यैवारोपितरजततादात्म्याद्वस्तुगत्येदमंशस्यातद्रूपत्वमिति बोध्यम्। अस्मिन्मतेऽधिष्ठानारोप्ययोरेकज्ञानविषयत्वं नास्ति। किं त्वाधारारोप्ययोरेव तदिति न भ्रमस्य शुक्त्यंशोल्लेखापत्तिरिति भावः॥

नन्वधिष्ठानारोप्ययोरारोपे प्रकाशमानत्वस्य संभावनाभाष्यटीकाविवरणादिषु समर्थितत्वात्तद्विरोध इत्याशङ्क्य मतान्तरं तदविरुद्धमाह— **अपरे त्विति**। संभिन्नत्वमभिन्नत्वम्, तादात्म्यमिति यावत्। **अज्ञानमेवेति**। न तु विशेषांशाज्ञानमित्येवकारार्थः। विशेषांशस्यारोपे स्फुरणाभावेन तस्याधिष्ठानत्वासंभवादिति भावः। शुक्तित्वादिरूपविशेषदर्शनस्याध्यासप्रतिबन्धकत्वात्तदभावविषयौ पूर्वोक्तान्वयव्यतिरेकाविति भावः। नन्विदमाकारवृत्त्येदमंशाज्ञानस्य निवृत्तत्वात्कथमिदमंशस्याधिष्ठानत्वम्, अत आह— **तस्य चेति**। इदमंशाज्ञानस्येत्यर्थः। नन्वज्ञानस्यावरणांशमात्रनिवृत्तिर्विक्षेपशक्त्या सहानुवृत्तिश्च क्वापि न

**तदनुवृत्तेर्नोपादानत्वासंभवः, जलप्रतिबिम्बितवृक्षाधो-ग्रत्वाध्यासे जीवन्मुक्त्यनुवृत्तप्रपञ्चाध्यासे च सर्वा-**

---

दृष्टा, अत आह— **जलप्रतिबिम्बितेति** । **प्रपञ्चेति** । जीव-न्मुक्तस्याप्यन्तःकरणादिप्रपञ्चप्रतीतेः सत्त्वादिति भावः । **सर्वा-त्मनेति** । रजतादिभ्रमस्थले सर्वात्मनाधिष्ठानसाक्षात्कारो नास्ति, शुक्तित्वादिविशेषरूपेण शुक्तिसाक्षात्काराभावात् । अतस्तत्रेद-मंशाज्ञाननिवृत्तावपि विशेषांशाज्ञाननिवृत्त्यभावात्तस्याध्यासोपादा-नत्वप्रसक्तिरस्ति । प्रतिबिम्बभ्रमस्थले तु जले वृक्षो नास्त्येव । ‘ऊर्ध्वाग्र एवायं वृक्षः’ इति सर्वात्मना विशेषदर्शनस्य सत्त्वा-त्सामान्यांशाज्ञानं निवृत्तं विशेषांशाज्ञानमनिवृत्तमिति विभागा-संभवेन विशेषांशाज्ञानमुपादानमिति वक्तुमशक्यम् । तस्मादत्र वृक्षाधोग्रत्वाध्यासानुरोधेनैकस्यैवाज्ञानस्यावरणांशनिवृत्तावपि वि-क्षेपशक्तिमदज्ञानांशानुवृत्तिरुपेया । तथा जीवन्मुक्त्यवस्थाया-मपि ब्रह्मतत्त्वसाक्षात्कारादावरणमात्रनिवृत्तिर्विक्षेपशक्तिमदज्ञानां-शानुवृत्तिश्च वाच्या । तथा रजताध्यासस्थलेऽपीदमंशाज्ञानस्यो-पादानत्वं सभवतीति भावः ॥

एव बाह्यगोचरापरोक्षवृत्तीनां सर्वासामेवावरणाभिभावकत्व-नियमस्य **भ्रमस्थलीयेदमाकारवृत्तौ** या व्यभिचारशङ्का, सा तत्रा-पीदमंशाज्ञाननिवर्तकत्वस्येदमंशावरणमात्रनिवर्तकत्वस्य वा सत्त्वा-दित्युपपादनेन **निरस्ता** । इदानीं प्रथममिदमाकारवृत्तिरेव भ्रम-

त्मनाधिष्ठानसाक्षात्कारानन्तरभाविन्यामावरणनिवृत्तावपि विक्षेपशक्तिसहिताज्ञानमात्रस्योपादानत्वसंप्रतिपत्तेरित्याहुः ॥

कवितार्किकचक्रवर्तिनृसिंहभट्टोपाध्यायास्तु 'इदं रजतम्' इति भ्रमरूपवृत्तिव्यतिरेकेण रजतोत्पत्तेः प्रागिदमाकारवृत्तिरेव नास्तीति तस्या अज्ञाननिवर्तकत्वसद्सद्भावविचारं निरालम्बनं मन्यन्ते । तथा हि— न तावद्भ्रमरूपवृत्तिव्यतिरेकेणेदमाकारा वृत्तिरनुभावसिद्धा, ज्ञानद्वित्वाननुभवात् । नाप्यधिष्ठानसामान्यज्ञानमध्या-

---

स्थले नास्ति । तत्र व्यभिचारशङ्कातत्समाधाने तु दूरत एव निरस्ते इत्याह— **कवितार्किकेति** । **भ्रमरूपवृत्तीति** । पूर्वं मतद्वये इदमाकारवृत्तेरसत्त्वात्तदभिव्यक्तचैतन्यरूपमेव शुक्तिरजतादिज्ञानम्, न तु वृत्तिरूपम् । अस्मिन्मते तदभावाद्वृत्तिरूपमेव तज्ज्ञानमिति मन्तव्यम् । एतच्चाग्रे स्फुटं भविष्यति । धर्मिज्ञानरूपामिदमाकारवृत्तिं निराकरोति— **तथा हीत्यादिना** । सा किमनुभवसिद्धा, उत कार्यकल्प्या, अथ वा सामग्रीकल्प्या । नाद्य इत्याह— **न तावदिति** । **ज्ञानद्वित्वेति** । 'इदम्' इत्येकं ज्ञानम् 'इदं रजतम्' इति ज्ञानमपरमित्यनुभवाभावादित्यर्थः । द्वितीयं निराकरोति— **नाप्यधिष्ठानेति** । अध्यासरूप कार्ये

**सकारणमिति कार्यकल्प्या, तस्यास्तत्कारणत्वे माना-भावात् । न चाधिष्ठानसंप्रयोगाभावे रजताद्यनुत्पत्ति-स्तत्र मानम्, ततो दुष्टेन्द्रियसंप्रयोगस्यैवाध्यासकारण-त्वप्राप्तेः । न च संप्रयोगो न सर्वभ्रमव्यापी, अधि-**

---

स्वकारणमधिष्ठानगोचरसामान्यज्ञानमन्तरेणानुपपद्यमानं सत्तत्क-ल्पयति । ततश्चाधिष्ठानसामान्यज्ञानरूपेदमाकारवृत्तिः सिध्यती-त्यपि न मन्तव्यम् , अधिष्ठानसामान्यज्ञानस्याध्यासकारणत्वे माना-भावादित्यर्थः । मानाभावोऽसिद्ध इति शङ्कते—**न चेति** । इद-मर्थस्य चक्षुरादिभि संप्रयोगे सति रजतादिरूपस्याध्यासस्योत्प-त्तिर्नान्यथेत्यनुभवसिद्धम् । तथा चोक्तान्वयव्यतिरेकाभ्यामधि-ष्ठानसामान्यज्ञानस्य रजताद्यध्यास प्रति कारणत्व सिध्यति । न चोक्तान्वयादिना संप्रयोगस्यैवाध्यासकारणत्वं सिध्यति, न धर्मि-ज्ञानस्येति वाच्यम् । तथा सत्यहंकाराद्यध्यासे संप्रयोगासंभवेन व्यभिचारापत्तेः । अत. संप्रयोगस्याध्यासं प्रति कारणत्वग्राह-काभ्यामेवान्वयव्यतिरेकाभ्या शुक्तिरजताद्यध्यासस्थले धर्मिज्ञान-स्यैव सप्रयोगसाध्यस्य कारणत्वं कल्प्यते । तथा चाधिष्ठानसा-मान्यज्ञानस्याध्यासकारणत्वे उक्तान्वयव्यतिरेकौ प्रमाणं भवत एवेति गूढाभिसंधिः । अभिसंधिमज्ञात्वा दूषयति— **तत इति**। उक्तान्वयादित इत्यर्थः । संप्रयोगमात्रस्य प्रमास्थलसाधारणत्वा-दुष्टेत्युक्तम् । धर्मिज्ञानकारणवादी स्वाभिसंधिमाविष्करोति— **न च संप्रयोग इति** । अधिष्ठानसामान्यज्ञानस्य सप्रयोग-

ष्ठानस्फुरणं तु स्वतः प्रकाशमाने प्रत्यगात्मन्यहंकारा-द्यध्यासमपि व्याप्नोतीति वाच्यम् । तस्यापि घटाद्यध्या-साव्यापित्वात्; घटादिप्रत्यक्षात्प्राक्तदधिष्ठानभूतनीरू-पब्रह्ममात्रगोचरचाक्षुषवृत्तेरसंभवात्स्वरूपप्रकाशस्य चा-

---

स्येव न व्यभिचार इत्याह— **अधिष्ठानस्फुरणं त्विति** । संप्रयोग-वैलक्षण्यार्थस्तुशब्द । अधिष्ठानस्फुरण कर्तृ शुक्तिरजताध्यासमि-वाहंकाराद्यध्यासमपि व्याप्नोतीत्यर्थः । **स्वत इति** । बाह्यचैतन्य-स्यावृतत्वाद्वृत्तिकृतं तत्राधिष्ठानस्फुरणं साक्षिचैतन्यस्यानावृतत्वा-दहंकाराद्यध्यासे स्वप्नप्रपञ्चाध्यासे च तत्स्वतः सिद्धमित्यर्थः । अधिष्ठानसामान्यज्ञानस्यापि व्यभिचारमाह— **तस्यापीति** । उक्तज्ञान तच्छब्दार्थः । घटाद्यध्यासव्यापित्वाभावादित्यर्थः । तथा च धर्मिज्ञानं नाध्यासकारणमिति भावः । अव्यापित्व-शब्दितं व्यभिचारमेवोपपादयति— **घटादीत्यादिना** । घटाद्य-ध्यासस्थले शुक्तिरजताद्यध्यासस्थल इव किं वृत्तिकृतमधिष्ठान-स्फुरणम्, अहंकाराद्यध्यासस्थल इव स्वतः सिद्ध वा । नाद्य इत्याह— **घटादिप्रत्यक्षादिति** । तत्पद घटादिपरम् । न द्वितीय इत्याह— **स्वरूपेति** । नन्वधिष्ठानप्रकाशमात्रमध्यासे कारणं लाघवात्, न त्वभिव्यक्ताधिष्ठानप्रकाश । तथा च 'सन्घटः' 'सन्पटः' इत्यादिरूपेष्वध्यासेषु घटाद्यधिष्ठानस्य सद्रूपस्य ब्रह्मणः स्वप्रकाशत्वादधिष्ठानप्रकाशमात्रं तत्राप्यस्तीति न व्यभिचार

वृतत्वादावृतानावृतसाधारण्येनाधिष्ठानप्रकाशमात्रस्या-ध्यासकारणत्वे शुक्तीदमंशसंप्रयोगात्प्रागपि तदवच्छिन्नचैतन्यरूपप्रकाशस्यावृतस्य सद्भावेन तदाप्यध्यासापत्तेः । न चाध्याससामान्येऽधिष्ठानप्रकाशसामान्यं हेतुः प्रातिभासिकाध्यासेऽभिव्यक्ताधिष्ठानप्रकाश इति नातिप्रसङ्गः, सामान्ये सामान्यस्य विशेषे विशेषस्य हेतुत्वौ-

---

इत्याशङ्क्याह— आवृतानावृतेति । तदापीति । संप्रयोगात्प्राक्कालेऽपीत्यर्थः । धर्मिज्ञानकारणवादी शङ्कते— न चाध्याससामान्य इति । प्रातिभासिकेति । अभिव्यक्ताधिष्ठानस्फुरण प्रातिभासिकाध्यासेष्वेव कारणमाचार्याणामभिप्रेतम्, तेष्वेव दोषसंप्रयोगसंस्काररूपकारणत्रयजन्यताया अध्यासभाष्यटीकाविवरणादिषु व्यवस्थापितत्वेन संप्रयोगकारणताग्राहकप्रमाणलभ्याधिष्ठानापरोक्ष्यस्य तेष्वेव कारणत्वसिद्धेरित्यर्थः । प्रकाशपदानन्तरं हेतुपदमनुषञ्जनीयम् । नातिप्रसङ्ग इति । न संप्रयोगात्प्राग्रजताद्यध्यासप्रसङ्ग इत्यर्थः । रजताद्यध्यासस्य प्रातिभासिकत्वेन तदधिष्ठानापरोक्ष्याय संप्रयोगाधीनवृत्तेरपेक्षितत्वादिति भावः । औचित्यादिति । तथा च धर्मिज्ञानस्याध्यासकारणत्वे संप्रयोगकारणताग्राहकान्वयादेः प्रमाणस्य सत्त्वाद्बाधकाभावाच्च तस्याध्यासकारणत्वसिद्धाविदमाकारा वृत्तिः सिद्धेति भावः । अभिव्यक्ताधिष्ठानप्रकाशस्य प्रातिभासिकाध्यासेष्वपि सर्वत्र व्याप्तिर्नास्तीति

**चित्यादिति वाच्यम् । एवमपि प्रातिभासिकशङ्खपीति-मकूपजलनैल्याद्यध्यासाध्यापनाद्रूपानुपहितचाक्षुषप्रत्य-यायोगेन तदानीं शङ्खादिगतशौक्ल्योपलम्भाभावेन चा-ध्यासात्प्राक्छङ्खादिरूपाधिष्ठानगोचरवृत्त्यसंभवात् ।**

---

कवितार्किकमतानुवर्ती दूषयति— **एवमपी**ति । अधिष्ठानापरो-क्ष्यस्य प्रातिभासिकाध्यासमात्रहेतुत्वे स्वीकृतेऽपीत्यर्थः । धर्मिज्ञान-कार-ावादे हि प्रथममिदमित्येवमाकारा वृत्तिरुदेति । तया च वृत्त्या-भिव्यक्ते शङ्खजलाद्यवच्छिन्ने चैतन्ये पीतरूपनीलरूपादेरध्यास इति प्रक्रिया । तथा च तत्रेदमाकारा वृत्ति· किं शङ्खादिद्रव्यमात्रं विषयीकरोति, किं वारोप्यरूपविशिष्टं द्रव्यम् । नाद्य इत्याह— **रूपानुपहिते**ति । रूपाविषयकद्रव्यचाक्षुषवृत्तिर्न सभवति, इतरथा वाय्वादेरपि चाक्षुषत्वापत्तेरिति भाव । द्वितीयेऽपि किं शुक्ल-रूपादिविशिष्टं द्रव्य विषयीकरोति किं वारोप्यरूपविशिष्टम् । न द्वितीय., आरोप्यरूपविशिष्टशङ्खादिवृत्तेरेव भ्रान्तित्वेन तस्या धर्मि-ज्ञानत्वाभावात् । नाद्य इत्याह— **तदानी**मिति । अध्यासात्पूर्वकाल इत्यर्थः । तदानीं शौक्ल्योपलम्भे चाध्यासाभावप्रसङ्गादिति भावः । **असंभवादि**ति । तथा चाभिव्यक्ताधिष्ठानस्फुरणस्य तत्रासंभवाद्व्य-भिचारेण धर्मिज्ञानं नाध्यासकारणमिति भाव· । नन्वध्यासात्पूर्वं द्रव्य-मात्ररूपेण शङ्खादिगोचरचाक्षुषवृत्तिरुदेत्येव, द्रव्यगोचरचाक्षुष-वृत्तौ रूपविषयकत्वनियमस्याप्रयोजकत्वात् । न चैव वाय्वादेरपि-

**न च प्रातिभासिकेष्वपि रजताद्यध्यासमात्रे निरुक्तो विशेषहेतुरास्तामिति वाच्यम् । तथा सति संप्रयोगात्प्राक्पीतशङ्खाद्यध्यासाप्रसङ्गाय तदध्यासे दुष्टेन्द्रियसंप्रयोगः कारणमित्यवश्यं वक्तव्यतया तस्यैव सामा-**

---

चाक्षुषत्वप्रसङ्ग., द्रव्यचाक्षुषे द्रव्यगतोद्भूतरूपस्य नियामकत्वा-दध्यासात्पूर्वकाले द्रव्यग्रहणेऽपि शुक्तित्वादेरिव दोषबलात्सनि-कृष्टस्यापि शुक्लरूपमात्रस्याग्रहणोपपत्तेश्च । तदुक्त भामत्याम्—'शङ्खं च दोषाच्छादितशुक्लिमानं द्रव्यमात्रस्वरूपं गृहीत्वा' इति । शुक्लिमा शुक्लरूपमित्यर्थः । अस्तु वा तत्र शुक्लरूपविशिष्टशङ्खा-दिग्रहणम् । तथापि नाध्यासानुपपत्तिः, दोषबलेन रूपगतशुक्ल-त्वजातिग्रहणप्रतिबन्धमात्रेणापि तदुपपत्ते । तथा च प्रातिभा-सिकाध्यासेष्वभिव्यक्ताधिष्ठानस्फुरणस्य व्यभिचाराभावाद्धर्मिज्ञान-रूपेदमाकारवृत्तिः सिद्धा भवति । तत्सिद्धौ च तस्यामावरणनि-वर्तकत्वसदसद्भावचिन्ता सालम्बनैवाचार्याणां न निरालम्बनेति चेत्, सत्यम् । अस्मिन्मतेऽयमेवास्वरस. 'उपाध्याया मन्यन्ते' इत्यनेन सूचित. । पीतशङ्खादिभ्रमस्थले वस्तुतो व्यभिचारा-भावेऽपि तमभ्युपगम्य धर्मिज्ञानकारणवादी शङ्कते— **न च प्रातिभासिकेष्वपीति । निरुक्त इति ।** अभिव्यक्ताधिष्ठानप्रकाश इत्यर्थः । **तथा सतीति ।** पीतशङ्खाद्यध्यासेष्वभिव्यक्ताधिष्ठान-प्रकाशस्य हेतुत्वानुपगमे सतीत्यर्थ. । अधिष्ठानापरोक्ष्यवत्सप्रयोग-स्यापि पीतशङ्खाद्यध्यासेषु कारणत्वानुपगमे सप्रयोगात्प्रागपि

न्यतः प्रातिभासिकाध्यासमात्रे लाघवात्कारणत्वसिद्धौ तत एव रजताद्यध्यासकादाचित्कत्वस्यापि निर्वाहादधिष्ठानप्रकाशस्य सामान्यतो विशेषतो वाध्यासकारण-

---

'पीतः शङ्ख' इत्याद्यध्यासप्रसङ्गः । अतस्तत्परिहाराय तत्र संप्रयोगस्य कारणत्वमवश्यं वाच्यमित्यर्थ । ततः किम्, तत्राह— **तस्यैवेति** । दुष्टेन्द्रियसंप्रयोगस्यैवेत्यर्थः । सामान्यत इत्युक्त सामान्यमेव दर्शयति— **प्रातिभासिकाध्यासमात्र इति** । प्रातिभासिकाध्यासत्वमेव दुष्टेन्द्रियसप्रयोगकार्यतावच्छेदकं लाघवात्, न तु पीतशङ्खाद्यध्यासत्व गौरवादित्यर्थ । ततोऽपि किम्, तत्राह— तत **एवेति** । संप्रयोगात्प्राक्पीतशङ्खाद्यध्यासप्रसङ्गपरिहाराय तत्र सामान्यत क्लृप्ताद्दुष्टेन्द्रियसप्रयोगादेवेत्यर्थः । **कादाचित्कत्वस्यापीति** । सदा रजताद्यध्यासप्रसङ्गपरिहारायाभिव्यक्ताधिष्ठानप्रकाशस्य रजताद्यध्यासकारणत्वं वाच्यम् । तथा सति शुक्त्यवच्छिन्नचैतन्यरूपस्याधिष्ठानप्रकाशस्यावृततया सदा तदभिव्यक्तेरभावेन सदा रजताद्यध्यासप्रसङ्गपरिहारोपपत्तेरिति हि धर्मिज्ञानकारणावादिनस्तत्राभिप्राय । स चातिप्रसङ्गपरिहारः पीतशङ्खाद्यध्यासस्थले क्लृप्तात्संप्रयोगादेव लभ्यत इत्यर्थः । **सामान्यत इति** । 'अधिष्ठानप्रकाशमात्रमध्यासमात्रे कारणम्, अभिव्यक्ताधिष्ठानप्रकाशः प्रातिभासिकाध्यासे कारणम्' इति पूर्वोक्तकार्यकारणभावद्वयमपि न सिध्यतीत्यर्थः । ननु तस्यैव सामान्यतः प्रातिभासिकाध्यासमात्रे लाघवात्कारणत्वसिद्धावित्यु-

**त्वस्यासिद्धेः । ननु च सादृश्यनिरपेक्षेऽध्यासान्तरेऽकारणत्वेऽपि तत्सापेक्षे रजताद्यध्यासे रजतादिसादृश्यभूतरूपविशेषादिविशिष्टधर्मिज्ञानरूपमधिष्ठानसामान्यज्ञानं**

---

क्तम्, अहंकाराद्यध्यासे साक्षिचैतन्ये स्वप्नाध्यासे च संप्रयोगासंभवेन व्यभिचारात् । न चाहंकाराद्यध्यासस्य व्यावहारिकत्वमते तत्र व्यभिचारो न दोष इति वाच्यम् । तथापि तत्प्रातिभासिकत्वमते दोषपरिहारासंभवात्साक्षिणि स्वप्नाध्यासे प्रातिभासिकत्वस्य संप्रतिपन्नतया तत्रोक्तव्यभिचारस्य दृढत्वाच्च । न च स्वप्नाद्यध्यासेऽभिव्यक्ताधिष्ठानस्फुरणं कारणम्, अन्यथा स्वप्नप्रपञ्चस्यापरोक्ष्याभावप्रसङ्गात्, बाह्यप्रातिभासिकाध्यासेषु तु दुष्टेन्द्रियसंप्रयोगः कारणमिति न तस्य व्यभिचार इति वाच्यम् । सर्वत्र प्रातिभासिकाध्यासमात्रे त्वदुक्तलाघवेनाभिव्यक्ताधिष्ठानप्रकाशस्य कारणत्वौचित्याद्बाह्याध्यासेषु संप्रयोगस्याधिष्ठानचैतन्याभिव्यञ्जकवृत्त्युत्पादकतया चारितार्थ्यसंभवाच्च, पीतशङ्खाद्यध्यासस्थलेऽप्यधिष्ठानचैतन्याभिव्यञ्जकवृत्तिसंभवस्य दर्शितत्वाच्चेति चेत्, सत्यम् । सूक्ष्मदृष्ट्या विचार्यमाण एवमेव । स्थूलदृष्ट्या तु संप्रयोगस्य लाघवात्प्रातिभासिकाध्यासमात्रे कारणत्वमुक्तमिति मन्तव्यम् । शुक्तिरजताद्यध्यासात्प्रागिदमाकारवृत्तिसिद्धये प्रकारान्तरेण धर्मिज्ञानस्य कारणत्वं शङ्कते-- **ननु च सादृश्येति । अध्यासान्तर इति ।** पीतशङ्खाद्यध्यास इत्यर्थः ।

**कारणमवश्यं वाच्यम्, दुष्टेन्द्रियसंप्रयोगमात्रस्य कारणत्वे शुक्तिवदिङ्गालेऽपि रजताध्यासप्रसङ्गात्। न च सादृश्यमपि विषयदोषत्वेन कारणमिति वाच्यम्। विसदृशेऽपि सादृश्यभ्रमे सत्यध्याससद्भावात्, जलधिसलिलपूरे दूरे नीलशिलातलत्वाध्यारोपदर्शनात्। न च**

---

शङ्खादेः पीतरूपादेश्च सादृश्याभावादिति भावः। तत्पदं सादृश्यपरम्। रजतादिना सह शुक्त्यादेः सादृश्यभूतो यो रूपविशेषादिस्तद्विशिष्टधर्मीत्यर्थः। स्थाण्वादौ पुरुषाद्यध्यासापेक्षितमूर्ध्वत्वादिकमादिशब्दार्थः। **संप्रयोगमात्रस्येति**। सादृश्यानपेक्षायामिति मात्रशब्दार्थः। अग्निदग्धं नीलरूपवत्काष्ठमिङ्गालशब्दार्थः। नन्वपेक्षितमपि सादृश्यं स्वरूपसदेवाध्यासकारणं तावतोक्तातिप्रसङ्गनिरासात्, न ज्ञातं सत्कारणम्। तथा च न धर्मिज्ञानस्य कारणत्वासिद्धिरिति मत्वा शङ्कते— **न च सादृश्यमपीति**। स्वरूपसत्कारणत्वे सादृश्यभ्रमादध्यासो न स्यात्, सादृश्यभ्रमस्थले स्वरूपसतः सादृश्यस्याभावात्। अतः सादृश्यज्ञानं भ्रमप्रमासाधारणमध्यासकारणं वाच्यमिति तद्विशिष्टधर्मिज्ञानसिद्धिरिति धर्मिज्ञानकारणवादी परिहरति— **विसदृशेऽपीति**। तत्रोदाहरणमाह— **जलधिसलिलपूर इति**। प्रवाहः पूरशब्दार्थः। जलस्य वस्तुतः शुक्लरूपवत्त्वान्नीलशिलातलसादृश्यं नास्ति। अतः सादृश्यभ्रमान्नीलशिलातलत्वारोप इति भावः। ननु धर्मि

'तद्धेतोरेव—' इति न्यायात्सादृश्यज्ञानसामग्र्येवा-ध्यासकारणमस्त्विति युक्तम्, ज्ञानसामग्र्या अर्थकार-णत्वस्य क्वचिदप्यदृष्टेस्ततः सादृश्यज्ञानस्यैव लघुत्वाच्च। न च 'स्वतः शुभ्रेऽपि शुभ्रकलधौतभृङ्गारगते स्वच्छे

---

ज्ञानकारणतापक्षेऽपि तत्सामग्रीत्वेन दुष्टेन्द्रियसंप्रयोगोऽवश्यं वाच्य. । तथा चावश्यिकत्वादध्यासविशेषकारणतावच्छेदकं सादृश्यज्ञानसामग्रीत्वमेव, न सादृश्यज्ञानत्वम् । ततश्च न धर्मिज्ञानसिद्धिरित्याशयेनेङ्गाले रजताध्यासप्रसङ्गं विस्मृत्य शङ्कते —न च तद्धेतोरेवेति । 'तद्धेतोरेवास्तु तद्धेतुत्वं मध्ये किं तेन' इति न्यायादित्यर्थः । धर्मिज्ञानवादी निराकरोति—**ज्ञानसामग्र्या इति** । धर्मिज्ञानकारणतापक्षे हि धर्मिज्ञानं रजतादिरूपार्थोत्पत्तौ कारणमिष्यते । तथा च 'तद्धेतोरेव' इति न्यायेन धर्मिज्ञान-सामग्रीभूतसंप्रयोगस्य कारणत्वमुच्यमानं रजताद्यर्थोत्पत्तावेव भवेत् । तच्च न संभवति, संनिकर्षस्य ज्ञान इव विषयोत्पत्तौ कारणताया. क्वचिदप्यक्लृप्तत्वादित्यर्थः । **तत इति** । सादृश्य-ज्ञानसामग्रीत्वापेक्षया सादृश्यज्ञानत्वस्यैव कारणतावच्छेदकत्वे ला-घवादित्यर्थः । तथा च धर्मिज्ञानसिद्धिरिति भावः । सादृश्य-ज्ञानस्याध्यासविशेषे कारणत्वाभावेऽपि व्यवस्थासंभवान्न धर्मि-ज्ञानसिद्धिरिति मत्वा पुनः शङ्कते— **न च स्वत इति** । जलस्य मुक्ताफलस्य च नैल्येन सादृश्याभावे समानेऽपि जल एव नैल्या-

जल एव नैल्याध्यासो न मुक्ताफले' इति व्यवस्थावद्वस्तुस्वभावादेव 'शुक्तौ रजताध्यासो नेङ्गालादौ' इति व्यवस्था, न तु सादृश्यज्ञानापेक्षणादिति वाच्यम् । स्वतः पटखण्डे पुण्डरीकमुकुलत्वानध्यासेऽपि तत्रैव

---

ध्यासो दृश्यते न मुक्ताफल इति व्यवस्थायां जलादिवस्तुस्वभाव एव हेतुर्नान्य इत्यर्थः । ननु पात्रगतनैल्यसन्निधानं जले तदध्यासे नियामकम्, न स्वभाव इत्यत आह— शुभ्रकलधौतेति । निर्मलसौवर्णपात्रविशेषगतेऽपीत्यर्थ । नन्वेवमपि जलगतनीलरूपवद्द्रव्यसंसर्गात्तत्रैव तदध्यास इति, नेत्याह— स्वत. शुभ्रेऽपीति । जलविशेषणमिदम् । स्वतः शुभ्रपदव्याख्यान स्वच्छ इति पदम् । एवं क्वचित्स्वभावस्यैवाध्यासप्रयोजकत्वे क्लृप्ते फलितमाह— वस्तुस्वभावादेवेति । उक्ते पीतशङ्खाध्यास इव भृङ्गारादिगतजले नैल्याध्यासे सादृश्यज्ञानानपेक्षत्वेऽपि पुण्डरीकमुकुलत्वाध्यासे तदपेक्षाया अन्वयव्यतिरेकासिद्धत्वेन तद्वच्छुक्तिरजताद्यध्यासेऽपि सादृश्यज्ञानभावाभावाभ्यामेव व्यवस्था न तु वस्तुस्वभावात्, अगतिकगतित्वाद्वस्तुस्वभावाश्रयणस्य । तथा च धर्मिज्ञानकारणतासिद्धिरप्रत्यूहेति मत्वा दूषयति— स्वतः पटखण्ड इति । पुण्डरीकस्य कमलस्य या मुकुलत्वावस्था तस्य अनध्यासेऽपीत्यर्थः । तत्रैव पटखण्ड एव । कर्तनादिना घटितः संपादितस्तदाकारः पुण्डरीकमुकुलाकारो यस्य पटखण्डस्य स

कर्तनादिघटिततदाकारे तदध्यासदर्शनेन तदध्यासस्य वस्तुस्वभावमननुरुध्य सादृश्यज्ञानमात्राभावानुरोधित्वनिश्चयात्, अन्यथान्यदापि तत्र तदध्यासप्रसङ्गात्। उच्यते— सादृश्यज्ञानस्याध्यासकारणत्ववादेऽपि विशेषदर्शनप्रतिबध्येषु रजताद्यध्यासेष्वेव तस्य कारणत्वं वाच्यम्। न तु तदप्रतिबध्येषु पीतशङ्खाद्यध्यासेषु, असंभवात्। विशेषदर्शनप्रतिबध्येषु च प्रतिबन्धकज्ञान-

---

तथा, तस्मिन्नित्यर्थः। तदध्यासेति। पुण्डरीकमुकुलत्वाध्यासेत्यर्थः। तदध्यासस्यानुरोधित्वनिश्चयादिति संबन्धः। अन्यथेति। वस्तुस्वभावस्यैव तदध्यासकारणत्व इत्यर्थ। अन्यदापीति। कर्तनादिना तदाकारसंपादनात्प्रागपीत्यर्थः। 'ननु सादृश्यनिरपेक्षेऽध्यासान्तरेऽकारणत्वेऽपि' इत्यादिना प्राप्तं सादृश्यज्ञानस्याध्यासविशेषे कारणताप्रसाधनद्वारा धर्मिज्ञानस्य कारणत्वमावश्यकमिति पूर्वपक्षं कवितार्किकमतानुवर्ती निराकरोति— उच्यत इत्यादिना। न त्विति। 'पीतत्वाभावव्याप्यशङ्खत्ववानयम्' 'नैल्याभावव्याप्यजलत्ववदिदम्' इत्यादिरूपविशेषदर्शनाप्रतिबध्येष्वित्यर्थः। उक्तविशेषदर्शने सत्यपि 'पीतः शङ्खः' 'नील जलम्' इत्यध्यासदर्शनादिति भावः। असंभवादिति। वस्तुतः सादृश्यस्य तत्रासंभवात्पुण्डरीकमुकुलत्वभ्रमवत्सादृश्यज्ञानानुरोधित्वाच्चेत्यर्थः। ततः किम्, तत्राह— विशेषदर्शनप्रति-

सामग्र्याः प्रतिबन्धकत्वनियमेन विशेषदर्शनसामग्र्यप्य-वश्यं प्रतिबन्धिका वाच्येति तत एव सर्वव्यवस्थोपपत्तेः किं सादृश्यज्ञानस्य कारणत्वकल्पनया । तथा इङ्गालादौ चक्षुःसंप्रयुक्ते तदीयनैल्यादिरूपविशेषदर्शनसामग्रीसत्त्वान्न रजताध्यासः । शुक्त्यादावपि नीलभागादिव्यापिचक्षुःसंप्रयोगे तत्सत्त्वान्न तदध्यासः । सदृशभा-

---

वव्येषु चेति । प्रतिबन्धकसामग्र्याः प्रतिबन्धकत्वोक्तौ दाहप्रतिबन्धकमण्यादिसामग्र्या दाहप्रतिबन्धकत्वप्रसङ्ग । तद्वारणाय ज्ञानपदम् । मण्यादेः प्रतिबन्धकज्ञानत्वाभावान्नातिप्रसङ्गः । ज्ञानसामग्र्याः प्रतिबन्धकत्वोक्तौ धर्मिज्ञानसामग्रीभूतसंप्रयोगस्याध्यासप्रतिबन्धकत्वप्रसङ्गः । तद्वारणाय प्रतिबन्धकेति ज्ञानविशेषणम् । धर्मिज्ञानस्य चाध्यासानुगुणत्वेन प्रतिबन्धकज्ञानत्वाभावान्नोक्तातिप्रसङ्गः । तथा च पक्षे साध्याभाववत्ताज्ञानं ग्राह्याभावावगाहित्वादनुमितिं प्रति साक्षात्प्रतिबन्धकम् । तत्र 'साध्याभावव्याप्यवत्त्वज्ञानं प्रतिबन्धकज्ञानसामग्रीत्वेनानुमितिप्रतिबन्धकम्' इति व्यवस्था प्रसिद्धेत्यर्थः । **तत एवेति ।** प्रतिबन्धकज्ञानसामग्र्याः प्रतिबन्धकत्वस्वीकारादेवेत्यर्थः । **किमिति ।** तथा च धर्मिज्ञानरूपेदमाकारा वृत्तिर्न सिध्यतीति भावः । सादृश्यज्ञानस्याकारणत्वे पूर्वोक्तातिप्रसङ्गं परिहरति—**इङ्गालादाविति ।** इङ्गालगतनैल्यादिर्विशेषः, तद्दर्शनसामग्री च चक्षुःसंयुक्तेङ्गालतादात्म्यरूपात्रास्तीति बोध्यम् । **नीलभागादीति ।** त्रिकोणभा-

गमात्रसंप्रयोगे तदभावादध्यासः । तदापि शुक्तित्वरूपविशेषदर्शनसामग्रीसत्त्वादनध्यासप्रसङ्ग इति चेत्, न । अध्याससमये शुक्तित्वदर्शनाभावेन तत्पूर्वं तत्सामग्र्यभावस्य त्वयापि वाच्यत्वात् । मम सादृश्यज्ञानरू-

---

गसंग्रहार्थमादिपदम् । तत्सत्त्वादिति । विशेषदर्शनसामग्रीसत्त्वादित्यर्थः । न तदिति । तत्पद रजतादिपरम् । ननु यदि शुक्तिसंप्रयोगकाले रजताध्यासाभावस्तर्हि संप्रयोगोऽप्यध्यासकारणं न स्यादिति, नेत्याह— सदृशभागमात्रेति । तदभावादिति । नैल्यादिदर्शनसामग्र्यभावादित्यर्थः । शङ्कते— तदापीति । सदृशभागमात्रसंप्रयोगकालेऽपीत्यर्थः । अनध्यासप्रसङ्ग इति । तथा चाध्यासाभावप्रसङ्गपरिहाराय सादृश्यज्ञानं दोषत्वेनाध्यासकारणं वाच्यम् । ततश्चोक्तदोषरूपप्रतिबन्धकसत्त्वादप्रतिबद्धा शुक्तित्वदर्शनसामग्री नास्ति । अतो रजताध्यास उपपद्यत इति धर्मिज्ञानकारणवादिनोऽभिसंधिः । अनध्यासप्रसङ्गं परिहर्तुमुभयसंमतमर्थं धर्मिज्ञानापलापी दर्शयति— नेत्यादिना । त्वयापीति । सादृश्यज्ञानकारणतावादिनापीत्यर्थः । वाच्यत्वादिति । सदृशभागमात्रसंप्रयोगकाले शुक्तित्वदर्शनसामग्र्या चक्षुःसंयुक्ततादात्म्यलक्षणायां सत्यामप्यध्यासदर्शनेन तदनुरोधाच्छुक्तित्वरूपविशेषदर्शनसामग्र्याः प्रतिबन्धको दोषोऽवश्यं वाच्य इति तावत्सत्यम् । स च दोषो न सादृश्यज्ञानम्, किं तु दूरत्वादिरेव । अतो दोषत्वेनापि न सादृश्यज्ञानमध्यासकारण-

पाध्यासकारणदोषेण प्रतिबन्धात्तदा शुक्तित्वदर्शनसामग्र्यभावाभ्युपगमः; तत्र तथाभ्युपगमे तु घट्टकुटीप्रभातवृत्तान्त इति चेत्, न। समीपोपसर्पणानन्तरं रजतसादृश्यरूपचाकचक्ये दृश्यमान एव शुक्तित्वोपलम्भेन तस्य तत्सामग्रीप्रतिबन्धकत्वासिद्धौ दूरत्वादिदोषेण प्रतिबन्धा-

---

मिति न धर्मिज्ञानसिद्धिरिति तदपलापिनोऽप्यभिसंधिः। धर्मिज्ञानवादी स्वाभिसंधिमुद्धाटयन्नाशङ्कते— ममेति। तवेति। धर्मिज्ञानापलापे प्रवृत्तस्य कवितार्किकमतानुवर्तिन इत्यर्थः। सादृश्यज्ञानस्याध्यासकारणत्वं त्वदनिष्टं दूरं गतस्यापि तव प्रसज्येतेति भावः। धर्मिज्ञानापलापवाद्यपि स्वाभिसंधिमुद्धाटयन्नध्यासप्रसङ्गं परिहरति— नेत्यादिना। तस्येति। सादृश्यदर्शनस्येत्यर्थः। तत्सामग्रीति। शुक्तित्वदर्शनसामग्रीत्यर्थः। रजतरागादिदोषसंग्रहार्थमादिपदम्। ननु दूरस्थस्यापि पुंसः कदाचिच्छुक्तौ शुक्तिप्रमाया दर्शनेन दूरत्वस्यापि सादृश्यज्ञानस्येव व्यभिचारस्तुल्यः। तथा रजते रागवतोऽपि समीपोपसर्पणानन्तरं शुक्तिप्रमादर्शनेन तस्यापि व्यवहारस्तुल्यः। तथा च दूरत्वादेरपि दोषत्वं न स्यात्। यदि च क्वचिदध्यासे कदाचित्कश्चिद्दोष इत्युक्तरीत्या दूरत्वादेर्दोषत्वेनाध्यासकारणत्वं समर्थ्यते, तदा ज्वालादौ सादृश्यज्ञानरूपेणैव दोषेण 'सेयं दीपज्वाला' इत्यादिभ्रमस्य सर्वानुभवसिद्धतया तस्यापि कदाचिद्रजताध्यासादौ दोषत्वेन कारणत्वं दुर्वारम्। सादृश्यज्ञानस्य दोषत्वं भाष्यसंमतं

द्वा व्यञ्जकनीलपृष्ठत्वादिग्राहकासमवधानाद्वा तत्सामग्र्य-भावस्य वक्तव्यत्वात् । एवं जलधिजले नियतनीलरू-

---

च । तथा च देवताधिकरणे भाष्यम्— 'सादृश्यात्प्रत्यभिज्ञानं केशादिष्विव' इति । तथा बौद्धाधिकरणेऽपि— 'सादृश्य-निमित्तं प्रतिसंधानम्' इति । प्रतिसंधानं प्रत्यभिज्ञानम् । तथा च सादृश्यज्ञानस्य दोषत्वेनाध्यासकारणत्वमतानिराकरणमयुक्तमिति चेत्, सत्यम् । तथापि स्थूलबुद्धिमाश्रित्येदमिति ध्येयम् । सहकार्यभावात्सामग्र्यभावमाह— व्यञ्जकेति । शुक्तित्वव्यञ्जके-त्यर्थः । ग्राहकपदं नीलभागव्यापिचक्षुःसंप्रयोगपरम् । तत्साम-ग्रीति । शुक्तित्वविशेषदर्शनसामग्र्यभावस्योभाभ्यां वक्तव्यत्वा-दित्यर्थः । शुक्तिरजतभ्रमस्थलोक्तन्यायमन्यत्रापि योजयति— एवमिति । सादृश्यज्ञानरूपदोषं विना रजताध्यासवन्नीलशिला-तलत्वाद्यध्यासः संभवतीत्यर्थः । जले नीलशिलातलत्वाध्यासे हि शुक्लरूपात्मकविशेषदर्शनं जलराशित्वादिरूपविशेषदर्शनं च प्रतिबन्धकम् । ततः शुक्लरूपादिदर्शनसामग्र्यपि तत्र प्रति-बन्धिका । तथा च प्रतिबन्धकज्ञानसामग्र्यभावादेव तत्र नील-शिलातलत्वारोपः, न तु प्रथमं जले नैल्याध्यासेन सादृश्यज्ञान-संपत्तौ सत्यां तद्दोषान्नीलशिलातलत्वाद्यध्यास इत्यर्थः । ननु जल-धिसलिलपूरे शुक्लरूपात्मकविशेषदर्शनसामग्र्याभावोऽसिद्धः, नी-लशिलातलत्वारोपात्पूर्वकाले चक्षुःसंयुक्ते जले शुक्लरूपस्य तादा-त्म्याभ्युपगमेन चक्षुःसंयुक्ततादात्म्यरूपसंनिकर्षस्यालोकादेश्च स-त्त्वात् । तथा जलराशित्वादिरूपविशेषदर्शनसामग्र्यभावोऽप्य-

पाध्यासप्रयोजकदोषेण दूरे नीरत्वव्यञ्जकतरङ्गादिग्राहकासमवधानेन च शौक्ल्यजलराशित्वरूपविशेषदर्शनसामग्र्यभावान्नीलशिलातलत्वाध्यासः । विस्तृते पटे

---

सिद्धः, जलराशित्वव्यञ्जकतरङ्गादिप्रत्यक्षस्यापि तत्र सत्त्वादित्यत आह— नियतेति । जलधिसलिले दूरे नैल्याध्यासवत्समीपोपसर्पणानन्तरमपि तदध्यासो दृश्यते । अतस्तस्य नियतत्वम् । एतदुक्तं भवति— शुक्लरूपात्मकविशेषदर्शनसामग्री नियतनीलरूपाध्यासप्रयोजकदोषेण प्रतिबद्धा । अत. साप्रतिबद्धा नास्ति । दूरत्वदोषाज्जलराशित्वव्यञ्जकतरङ्गादेर्ग्राहकसमवधानं नास्ति । तेन जलराशित्वरूपविशेषदर्शनसामग्री च नास्ति । तथा च द्विविधप्रतिबन्धकज्ञानसामग्र्यभावाज्जलधिसलिले नीलशिलातलत्वाध्यास उपपद्यत इति । अत्रेदं बोध्यम्— जलधिसलिलपूरे नीलशिलातलत्वारोपे उक्तविधया विशेषदर्शनसामग्र्यभावस्यापेक्षितत्वेऽपि न तावता तदध्यास । किं तु जले नीलरूपाद्यध्यासेन नीलशिलातलसादृश्यसपत्त्यनन्तरमेव तदध्यासः । तथा च दूरे नीलशिलातलत्वाद्यध्यासवतां जलधिसलिलपूरसमीपोपसर्पणानन्तरं व्यवहारः— 'अस्मिञ्जलधिसलिलपूरे मम दूरे नैल्यनैश्चल्यादिसाम्येन नीलशिलातलत्वभ्रम आसीत्, इदानीं स भ्रमो निवृत्तः' इति । एवं तत्र तत्र 'सादृश्यदोषान्मम पूर्वमन्यथा भ्रम आसीत्, इदानी स निवृत्तः' इति लोकव्यवहार एव सादृश्यज्ञानस्य दोषत्वेनाध्यासविशेषेषु कारणत्वसाधको द्रष्टव्य

परिणाहरूपविशेषदर्शनसामग्रीसत्त्वान्न पुण्डरीकमुकुलत्वाध्यासः । कर्तनादिघटिततदाकारे तदभावात्तदध्यास इति । नन्वेवं करस्पृष्टे लोहशकले तदीयनीलरूपविशेषदर्शनसामग्र्यभावाद्रजताध्यासः किं न भवेत्सादृश्यज्ञानानपेक्षणादिति चेत्, भवत्येव । किं तु

---

इति । सादृश्यज्ञानस्याध्यासकारणताग्राहकान्वयव्यतिरेकोदाहरणान्तरमप्यन्यथयति— विस्तृत इति । परिणाहो विस्तारः । तद्दर्शनं पुण्डरीकमुकुलत्वाध्यासप्रतिबन्धकम्, तत्सामग्रीसत्त्वादित्यर्थः । सादृश्यज्ञानकारणत्वमते हि चक्षुःसंप्रयोगस्थले चाक्षुषं सादृश्यज्ञानं धर्मिज्ञानत्वेन दोषत्वेन च रजताद्यध्यासोत्पत्तौ कारणम् । त्वगिन्द्रियसंप्रयोगस्थले च स्पार्शनं सादृश्यज्ञानमुक्तविधया रजताद्यध्यासोत्पत्तावेव कारणम् । कवितार्किकमते तु धर्मिज्ञानप्रसङ्गभीत्या सादृश्यज्ञानं कुत्राप्यध्यासे कारणं नाभ्युपेयत इति व्यवस्था । तथा च त्वगिन्द्रियेदमर्थसंप्रयोगस्थले त्वदभिमताध्यासकारणसत्त्वात्स किं न स्यादिति शङ्कते— नन्वेवमिति । सादृश्यज्ञानं विनाप्यध्यासप्रतिबन्धकविशेषदर्शनसामग्र्यभावमात्रेणाध्यासोपगम इत्यर्थः । किं तत्र रजताध्यास आपाद्यते किं वा रजताध्यास एवापाद्यते । आद्य इष्टापत्तिरित्याह— भवत्येवेति । द्वितीयं शङ्कते— किं त्विति । तत्र विशेषदर्शनसामग्र्यभावस्य ताम्राद्यध्याससाधारणत्वाद्रजताध्यास एव स्यादित्यत्रापादकं नास्तीति मत्वा परिहरति— ताम्रादीति । रक्तसुवर्ण-

ताम्रादिव्यावर्तकविशेषदर्शनसामग्र्या अप्यभावात्तद्ध्यासेनापि भाव्यमिति क्वचिदनेकाध्यासे संशयगोचरो भवति । क्वचित्तु रजतप्राये कोशगृहादौ रजताध्यास एव भवति । क्वचित्सत्यपि सादृश्यज्ञाने शुक्तिकादौ कदाचित्करणदोषाद्यभावेनाध्यासानुदयवदध्यासानुदयेऽपि न हानिः । तस्मान्न कार्य-

---

शकलादिसंग्रहार्थमादिपदम् । क्वचिदिति । करतलस्पृष्टलोहशकलस्थलेऽपि क्वचिदित्यर्थः । गोचर इति । लोहशकलरूपेदमर्थः 'किमिदं रजतम्, किं वा ताम्रम्, किं वा सुवर्णादि' इति संशयविषयो भवतीत्यर्थः । ताम्रादिव्यावर्तकविशेषदर्शनस्थले तु रजताध्यास एव भवतीत्याह— क्वचित्त्विति । यस्मिन्कोशगृहादौ प्रायेण रजतशकलानामेवावस्थानं तत्र प्रविष्टस्य दैवादयःशकले करतलस्पृष्टे सति तत्र रजताध्यास एव भवति, रजतकोशगृहमिति बुद्धेस्तस्य सत्त्वादित्यर्थः । ननु क्वचित्करतलस्पृष्टे लोहशकले रजताध्यासाभावोऽपि दृश्यते । स च तव मते न संभवति, विशेषदर्शनसामग्र्यभावस्य तत्रापि सत्त्वेन रजताध्यासापत्तेरावश्यिकत्वात् । मम तु सादृश्यज्ञानरूपकारणाभावात्स न भवतीति वक्तुं शक्यत इत्यत आह— क्वचित्सत्यपीति । समीपोपसर्पणानन्तरं सत्यपि सादृश्यज्ञाने यथा रजताध्यासाभावस्तव मत उपेयते तथा मन्मतेऽपि क्वचिदध्यासाभावो न दोषावह इत्यर्थः । तस्मादिति । कथमपि

**कल्प्येदमाकारावृत्तिः । नाप्यप्रतिबद्धेदमर्थसंप्रयोगका-रणकल्प्या, ततो भवन्त्या एवेदंवृत्तेर्दुष्टेन्द्रियसंप्रयोगक्षुभिताविद्यापरिणामस्वसमकालरजतविषयत्वस्याप्यसमा-**

---

धर्मिज्ञानस्याध्यासकारणत्वासिद्धेरित्यर्थ. । इदमाकारवृत्तिरनुभवसिद्धा वा कार्यकल्प्या वा कारणकल्प्या वेति विकल्पत्रये प्रथमद्वितीयौ निरस्य तृतीय निराकरोति— **नाप्यप्रतिबद्धेति** । इदमर्थस्य चक्षु संप्रयोगकालेऽन्यत्र व्यासङ्गे सतीदमर्थगोचरज्ञानानुदयादप्रतिबद्धेति विशेषणम् । यथोक्तसंप्रयोगवशाज्जायमाना वृत्तिर्भ्रान्तिरूपैव जायते । न तु भ्रान्तेः प्राचीनेदमर्थमात्रगोचरा प्रमारूपा, तत्र मानाभावादित्याशयेनाह— **तत इति** । इदमर्थावच्छिन्नचैतन्ये विद्यमाना रजतपरिणामिन्यविद्या दुष्टेन्द्रियसंप्रयोगरूपादध्यासनिमित्तकारणभूतात्क्षोभं कार्याभिमुख्य प्राप्नोति । उत्तरक्षणे च रजतरूपेण परिणमते । दुष्टेन्द्रियसंप्रयोगाद्वृत्तिरपि तदैव जायते । तथा चाप्रतिबद्धाद्दुष्टेन्द्रियसंप्रयोगाद्भवन्तीदमर्थगोचरा वृत्तिः स्वकालोत्पन्नरजतविशिष्टदमर्थं विषयीकरोतीत्यर्थः । स्वपदं वृत्तिपरम् । धर्मिज्ञानपक्ष इदमाकारवृत्तिरविद्याक्षोभिका, तदभावपक्षे धर्मिज्ञानहेतुसंप्रयोगोऽविद्याक्षोभक इति विभाग इति स्थिते; तत्रान्त्यपक्षो न युक्तः, इदमर्थसप्रयोगस्येदमाकारवृत्ताविव रजतगोचरवृत्तावहेतुत्वाज्ज्ञानसमकालोत्पन्नरजतस्य ज्ञानात्पूर्वं चक्षुःसंनिकर्षाभावाच्च । तथा च रजतगोचरवृत्तौ सामग्र्यभाव एवेदंवृत्तेर्धर्मिमात्रगोचरतां

**भिरुच्यमानत्वात्, तत्र च ज्ञानसमानकालोत्पत्तिके प्रतिभासमात्रविपरिवर्तिनि रजते तत्प्राचीनसंप्रयोगाभावेऽपि तत्तादात्म्याश्रयेदमर्थसंप्रयोगादेव तस्यापि चक्षुर्ग्राह्यत्वोपपत्तेः, 'चक्षुषा रजतं पश्यामि' इति प्रातिभासिकरजतस्य स्वसंप्रयोगाभावेऽपि चाक्षुषत्वानुभवात्। न च स्वसंप्रयोगाभावादेव बाधकान्न तच्चाक्षुषं**

---

व्यवस्थापयतीत्याशङ्कयाह— तत्र चेति। भ्रमस्थल इत्यर्थः। प्रातिभासकालमात्रे विपरितवर्तनं सत्ता यस्य तत्प्रतिभासमात्रविपरिवर्ति, तस्मिन्। प्रतीतिव्याप्यसत्ताक इति यावत्। इदमर्थसंप्रयोगस्य रजतगोचरवृत्त्युत्पत्तावपि हेतुत्वं सम्भवति। न चान्यसंप्रयोगादन्यगोचरवृत्त्युपगमे घटेन्द्रियसंप्रयोगात्पटगोचरवृत्त्यापत्तिरिति वाच्यम्। स्वगोचरवृत्तौ स्वस्य स्वतादात्म्याश्रयस्य वेन्द्रियेण सह संप्रयोगः कारणमिति कल्पनात्। तावतोक्तातिप्रसङ्गपरिहारोपपत्तेरित्याशयेनाह— तत्प्राचीनेति। रजतप्रतिभासात्प्राचीनेत्यर्थः। तत्तादात्म्येति। रजतस्येदमर्थे कल्पितत्वाद्रजततादात्म्याश्रयत्वमिदमर्थस्य। पटतादात्म्याश्रयत्वं तु न घटेऽस्ति, पटस्य तत्रानध्यस्तत्वादिति भावः। चक्षुःसंप्रयोगानाश्रयस्यापि रजतस्य चाक्षुषवृत्तिविषयत्वकल्पने हेतुमाह— चक्षुषेति। धर्मिज्ञानवादी चाक्षुषत्वानुभवस्यान्यथासिद्धिं वदन्धर्मीन्द्रियसंप्रयोगजन्या वृत्तिर्धर्मिमात्रगोचरेत्याशयेन शङ्कते— न चेति। तद्रजतमिदंवृत्तिसमकाल सदुष्टेन्द्रियसंप्रयोगजन्यमपि न

**नापि दुष्टेन्द्रियसंप्रयोगजन्यम्, इदंवृत्तिसमकालं ज्ञानकारणस्येन्द्रियसंप्रयोगस्यार्थकारणत्वाक्लृप्तेः; किं त्विदंवृत्त्यनन्तरभावि तज्जन्यं तदभिव्यक्ते साक्षिण्यध्यासात्तद्भास्यम्, चाक्षुषत्वानुभवस्तु स्वभासकचैतन्याभि-**

---

भवतीत्यत्र हेतुमाह— **ज्ञानकारणस्येति** । तथा च प्रातिभासिकस्य रजतस्यैन्द्रियिकत्वपक्षेऽन्यसंप्रयोगस्यान्यगोचरवृत्तिजनकत्वमेकं कल्पनीयम् । तथा ज्ञानकारणस्य संनिकर्षस्य रजताद्यर्थोत्पत्तौ कारणत्वमपरं कल्पनीयमिति गौरवमिति भावः । यदि संप्रयोगो न रजताद्यर्थे कारणं तर्हि किं तत्र कारणम्, अविद्यामात्रस्य सदा सत्त्वेन रजताद्यध्यासस्य कादाचित्कत्वं प्रति तस्य प्रयोजकत्वानुपपत्तेरिति शङ्कते— **किं त्विति** । उत्तरमाह— **इदंवृत्त्यनन्तरभावीति** । इन्द्रियसंप्रयोगादिदमर्थमात्रगोचरा वृत्तिरुदेति । तया चाध्यासं प्रति निमित्तकारणभूतया क्षुब्धा सत्यविद्या रजताकारेण परिणमते । रजतस्य चेदमाकारवृत्त्यभिव्यक्तमिदमर्थावच्छिन्नचैतन्यमाधिष्ठानम् । तथा च रजतं स्वगोचरवृत्तिं विनैव चैतन्यभास्यमहंकारादिवदित्यर्थः । तज्जन्यमित्यत्र तदभिव्यक्त इत्यत्र च तत्पदमिदंवृत्तिपरम् । तद्वृत्तेश्च कादाचित्कत्वाद्रजताद्यध्यासस्य कादाचित्कत्वमिति भावः । **तद्भास्यमिति** । साक्षिभास्यमित्यर्थः । न च बाह्यचैतन्यावभास्यस्य शुक्तिरूप्यादेरहंकारादिवत्कथं साक्षिभास्यत्वमिति वाच्यम् । स्वगोचरज्ञानरूपवृत्त्यनुपहितचैतन्यभास्यस्यैव साक्षिभास्यशब्दार्थत्वात् । तथा च

**व्यञ्जकेदंवृत्तिजनकत्वेन परम्परया चक्षुरपेक्षामात्रेणेति**

यथाविद्याहंकारतद्धर्माणामवभासकचैतन्यमविद्यादिगोचरया ज्ञाना-त्मकवृत्त्योपहितं न भवति, एवं शुक्तिरजतादिभासकचैतन्यमपि शुक्तिरजतादिगोचरज्ञानात्मकवृत्त्युपहितं न भवतीति तस्य साक्षि-भास्यत्वमुक्तमिति मन्तव्यम् । ननु शुक्तिरजतस्य साक्षिभास्यत्वे चाक्षुषत्वानुभवविरोध इति, नेत्याह— **चाक्षुषत्वानुभवास्त्विति** । स्वं शुक्तिरजतम्, तद्भासकस्येदमंशावच्छिन्नचैतन्यस्याभिव्यञ्जि-कामिदंवृत्तिं प्रति चक्षुषो जनकत्वेन शुक्तिरजतस्य चक्षुरपेक्षा वर्तते । सा चापेक्षा परम्परयैव, स्वाधिष्ठानगोचरवृत्त्यर्थमपेक्षित-त्वात् । न तु साक्षात्, स्वगोचरवृत्त्यर्थमनपेक्षितत्वात् । यथाकथं-चिच्चक्षुरपेक्षामात्रेण तत्र चाक्षुषत्वानुभव उपपद्यत एवेत्यक्ष-रार्थः । ननु 'चक्षुषा रजतं पश्यामि' इत्यनुभवो हि रजते चाक्षुषवृत्तिविषयत्वमवगाहते, न तु शुक्तिरजतगत चाक्षुषवृत्त्य-भिव्यक्तचैतन्यविषयत्वमिति वस्तुगतिः । तथा च 'परम्परया चक्षुरपेक्षामात्रेण' इति ग्रन्थेन चाक्षुषत्वानुभवस्य चाक्षुषवृत्त्यभि-व्यक्तचैतन्यविषयत्वं रजतगतं विषय इति तदनुभवस्य गतिः कल्पितेति प्रतिभाति । तदयुक्तम्, शब्दवदनुभवस्य व्याख्याना-नर्हत्वादिति चेत्, न । वस्तुत इदमर्थगतस्येदंत्वस्य तत्रानुभूय-मानस्य यथा शुक्तिरजते संसर्गारोपस्तथेदमर्थगतस्य तत्रानुभूय-मानस्य चाक्षुषत्वस्य शुक्तिरजते संसर्गारोप इत्यस्यार्थस्य प्रकृते विवक्षितत्वात् । तथा च स्वस्मिन्नारोपणीयं यच्चाक्षुषवृत्तिविषय-

वाच्यम् । तथा सति पीतशङ्खभ्रमे चक्षुरनपेक्षाप्रसङ्गात् । न हि तत्र शङ्खग्रहणे चक्षुरपेक्षा, रूपं विना केवलशङ्खस्य चक्षुर्ग्राह्यत्वायोगात् । नापि पीतिमग्रहणे, आरोप्यस्यैन्द्रियिकत्वानभ्युपगमात् । न च पीतिमा स्वरूपतो

---

त्वमिदमर्थगत तल्लाभाय शुक्तिरजतस्य चक्षुरपेक्षा वर्तत इत्ययमर्थ. 'परम्परया चक्षुरपेक्षामात्रेण' इति ग्रन्थस्य द्रष्टव्य इति न कश्चिद्दोष. । प्रातिभासिकरजतादेः साक्षिभास्यत्वमेव, न त्वैन्द्रियिकत्वमिति मतं दूषयति— तथा सतीति । अधिष्ठानस्यैन्द्रियिकत्वलाभायैवेन्द्रियापेक्षा, न त्वारोप्यस्य तदर्थमिन्द्रियापेक्षेत्युपगमे सतीत्यर्थः । न हीति । इद चापाततः, पीतशङ्खभ्रमादिस्थलेऽप्यध्यासप्राचीनधर्मिगोचरचाक्षुषवृत्तेः प्रागुपपादितत्वादिति मन्तव्यम् । नापि पीतिमग्रहण इति । चक्षुरपेक्षेत्यनुषङ्गः । रूपं विना केवलशङ्खस्य चक्षुर्ग्राह्यत्वायोगमुपेत्यारोपितस्य साक्षिभास्यत्ववादी शङ्कते— न च पीतिमेति । पीतरूपमित्यर्थः । यथा शुक्तौ रजतं स्वरूपेणाध्यस्यते तथा शङ्खे पीतरूपं नाध्यस्यत इत्यर्थः । नयनगतं यत्पित्तं पीतरूपयुक्तद्रव्यविशेषः, तस्य यः पीतिमा, तस्य पित्तद्रव्य एवानुभूयमानस्य शङ्खे संसर्ग एवाध्यस्यते, यथा जपाकुसुमादावनुभूयमानस्य लौहित्यस्य स्फटिकमण्यादौ संसर्गाध्यासस्तद्वत् । न चान्यगतस्यान्यत्रारोपाभ्युपगमेऽन्यथाख्यातिप्रसङ्ग इति वाच्यम् । अध्यस्यमानसंसर्गस्यानिर्वचनीयस्योत्पत्त्यभ्युपगमेऽन्यथाख्यातिवैलक्षण्यसत्त्वादिति

नाध्यस्यते, किं तु नयनगतपित्तपीतिम्नोऽनुभूयमानस्य शङ्खे संसर्गमात्रमध्यस्यत इति पीतिमानुभवार्थमेव चक्षुरपेक्षेति वाच्यम् । तथा सति शङ्खतत्संसर्गयोरप्रत्यक्षत्वप्रसङ्गात्; नयनप्रदेशगतपित्तपीतिमाकारवृत्त्यभिव्यक्तसाक्ष्यसंसर्गेण तयोस्तद्भास्यत्वासंभवात्, पीतिमसंसृष्टशङ्खगोचरैकवृत्त्यनभ्युपगमाच्च । न च नयन

---

भावः । पीतिमानुभवार्थमेवेति । शङ्खे पीतरूपसंसर्गाध्यासात्प्राचीनो यः पित्तद्रव्ये पीतरूपानुभवः, तदर्थमित्यर्थः । तत्र किं नयनप्रदेशगत एव पित्तद्रव्ये पीतिमानुभवः, किं वा शङ्खदेशं प्राप्य तत्रस्थे पित्तद्रव्ये पीतिमानुभवः । आद्यं दूषयति— तथा सतीति । नयनगत एव पित्तद्रव्ये पीतरूपानुभवाङ्गीकार इत्यर्थः । शङ्खतत्संसर्गयोरिति । शङ्खस्य शङ्खपीतरूपयोः ससर्गस्य चेत्यर्थः । शङ्खतत्संसर्गयोर्भानं किं पित्तपीतिमगोचरवृत्त्यभिव्यक्तेन साक्षिणा, किं वा पीतिमसंसृष्टशङ्खगोचरवृत्त्यभिव्यक्तेन साक्षिणा; नाद्य इत्याह— नयनप्रदेशेति । नयनप्रदेशगतपित्तपीतिमाकारवृत्त्या तत्प्रदेशस्थं पीतिमावच्छिन्नचैतन्यमभिव्यज्यते । तेन चाभिव्यक्तचैतन्यलक्षणसाक्षिणा सह शङ्खस्य शङ्खे समारोपितपीतरूपसंसर्गस्य चासंबन्धाच्छङ्खतत्संसर्गयोरापरोक्ष्यं न स्यादित्यर्थः । न द्वितीय इत्याह— पीतिमसंसृष्टेति । अनभ्युपगमाच्चेति । साक्षिभास्यत्ववादिनेति शेषः । शङ्खदेशं प्राप्ते पित्तद्रव्ये पीतिमानुभव इति द्वितीयं

प्रदेशस्थितस्य पित्तपीतिम्नो दोषाच्छङ्खे संसर्गाध्यासो नाङ्गीक्रियते, किं तु नयनरश्मिभिः सह निर्गतस्य विषयव्यापिनस्तस्य तत्र संसर्गाध्यासः कुसुम्भारुणिम्न इव कौसुम्भ इति संभवति तदाकारवृत्त्याभिव्यक्त्या साक्षिसंसर्ग इति वाच्यम् । तथा सति सुवर्णलिप्त इव पित्तोपहतनयनेन वीक्ष्यमाणे शङ्खे तदितरेषामपि पीति-मधीप्रसङ्गात् । न च स पीतिमा समीपे गृहीत एव दूरे दूरे ग्रहीतुं शक्यो विहायस्युपर्युत्पतन्विहंगम इव,

---

शङ्कते— न चेति । विषयव्यापिनस्तस्येति । शङ्खरूपमधिष्ठानं व्याप्तस्य पित्तद्रव्यस्येत्यर्थः । तथा च पित्तपीतिमाकारवृत्त्या शङ्खदेशस्थस्यैव चैतन्यस्याभिव्यक्त्या शङ्खतत्संसर्गयोरापरोक्ष्यं सम्भवतीति भावः । कुसुम्भं रक्तद्रव्यविशेषः । तद्व्याप्ते पटे यथा कुसुम्भेऽनुभूयमानस्य रक्तरूपस्य संसर्गारोपस्तथेत्यर्थः । नयन-गतपित्तद्रव्यस्य नयने सर्वैरनुभूयमानस्य नयनरश्मिद्वारा निर्गत्य शङ्खव्यापित्वोपगमे बाधकमाह— तथा सतीति । पित्तोपहत-नयनः पुरुषो यदा शङ्खं पश्यति तदा तदितरेषामपि 'पीतः शङ्खः' इत्यनुभवप्रसङ्गादित्यर्थः । ननु पित्तद्रव्यस्य नयनप्रदे-शाद्विषयदेशं प्रति गमनावसरे यथा पित्तोपहतनयनेन नयनदेश-मारभ्य विषयव्याप्तिपर्यन्तं पीतिमा गृह्यते तथान्यैरपि नयन-समीपे मध्ये च पीतिमा गृहीतश्चेच्छङ्खदेशेऽपि ग्रहीतु शक्यते,

**इतरेषां च समीपे न ग्रहणमिति वाच्यम् । इतरेषामपि तच्चक्षुर्निकटन्यस्तचक्षुषां पीतिसमासामीप्यसत्त्वेन तद्ग्रहणस्य दुर्वारत्वात् । एवमप्यतिधवलसिकतामयतलप्रवहदच्छनदीजले नैल्याध्यासे रक्तवस्त्रे निशि चान्द्रिकायां नैल्याध्यासे गगननैल्याध्यासे चानुभूयमानारोपस्य वक्तुमशक्यत्वेन तत्र नैल्यसंसृष्टाधिष्ठानगोचरचाक्षुषवृत्त्यनभ्युपगमे चक्षुरनुपयोगस्य दुष्परिहरत्वाच्च; अनास्वादि-**

---

नान्यथेत्यत्र दृष्टान्तमाह— विहायसीति । यथा विहगमः पक्षी गगन उत्पतन्नुत्पतनावसरे भूप्रदेशमारभ्य येन पुंसा गृह्यते तेनैव गगनोपरिभागे दूरं गतोऽपि गृह्यते नान्यैः, तथा प्रकृतेऽपीत्यर्थः । दृष्टान्तवैषम्यमाह— **इतरेषामपीति** । दृष्टान्ते हि गगनोपरिभागे दूरे विहगमं पश्यन्कश्चिदन्यं प्रत्युपदिशति— 'मम चक्षुर्निकटे त्वच्चक्षुर्न्यस्तं चेत्त्वयापि स विहंगमो द्रष्टुं शक्यते' इति । स चान्यस्तथा कृत्वा तं पश्यति । न तथा प्रकृते संभवतीत्यर्थः । अस्तु वानुभूयमानारोपस्थले कथंचिच्चक्षुरपेक्षा, स्मर्यमाणनैल्याद्यध्यासस्थलेषु तु तदपेक्षा सर्वात्मना वक्तुमशक्येत्याह— **एवमपीति** । जलाधारभूभागे वा जलमिश्रितद्रव्यविशेषे वा यदि नीलरूपमस्ति, तदा तत्रैवानुभूयमाननैल्यस्य जलेऽध्यास इति शङ्का भवेत् । तन्निवृत्तये सिकतामयतलस्यातिधवलत्वं नदीजलस्य चाच्छत्वं विशेषणमुपात्तम् । अच्छत्वं निर्मलत्वम् । निशि रात्रौ । चन्द्रिकायामित्यस्यापि पूर्वो-

तत्तिक्तरसस्य बालस्य मधुरे तिक्तताावभासो जन्मान्तरानुभवजन्यसंस्कारहेतुक इति प्रतिपादयता पञ्चपादिकाग्रन्थेन स्वरूपतोऽध्यस्यमानस्यैव तिक्तरसस्यैन्द्रियिकत्वं स्फुटीकृतमाच, अन्यथा तत्र रसनाव्यापारा-

क्तमेव योजनं द्रष्टव्यम् । दुष्परिहरत्वाच्चेति । अत्र पीतशङ्खजलनैल्याद्यध्यासेष्वारोप्यपीतिमनैल्यादिसंसृष्टाधिष्ठानगोचरचाक्षुषवृत्त्यनुपगमेऽपि चक्षुरनुपयोगो न दुष्परिहरः, शङ्खादिधर्मिमात्रगोचरचाक्षुषवृत्तिसंभवस्य प्राग्दर्शितत्वादिति मन्तव्यम् । आरोप्यस्येन्द्रियजन्यवृत्तिविषयत्वे संमतिमाह— **अनास्वादितेति** । अस्मिञ्जन्मन्यनास्वादितो रसनेन्द्रियेणाननुभूतस्तिक्तरसो येन बालेन स तथा, तस्येत्यर्थ । मधुरे स्तन्यादौ तिक्तावभासस्तिक्ततासाक्षात्कार· । स च जन्मान्तरीयतिक्तरसानुभवजन्यसंस्कारजन्यः, आरोप आरोप्यसजातीयपूर्वानुभवजन्यसंस्कारस्य कारणत्वादित्यक्षरार्थः । अत्र ग्रन्थे तिक्तताबभासस्य संस्कारसहकृतरसनेन्द्रियजन्यत्व भाति, तस्य संस्कारमात्रजन्यत्वे स्मृतित्वप्रसङ्गात् । तथा च तिक्तताध्यासाधिष्ठानस्य मधुरद्रव्यस्य रसनेन्द्रियायोग्यतया परिशेषात्स्वरूपतोऽध्यस्यमानस्य तिक्तरसस्यैव रसनेन्द्रियजन्यवृत्तिविषयत्वं स्पष्टीकृतमिति भवति । समारोप्यस्यैन्द्रियिकत्वे संमतिरयं ग्रन्थ इति भावः । अध्यस्यमानस्यैवेत्येवकारार्थमाह— **अन्यथेति** । आरोप्यातिरिक्तस्यैन्द्रियिकत्वानुपगमे

तत्र बालस्य तिक्ततावभासस्थले रसनेन्द्रियव्यापारो न स्यात्, मधुरद्रव्यस्य तदयोग्यत्वादित्यर्थः । वस्तुतस्तु— तिक्ततावभास इत्यत्र तिक्ततापदावभासपदयोः कर्मधारयः । अवभासपदं च 'अवभास्यते' इति व्युत्पत्त्याध्यस्यमानतिक्तरसपरम्, पञ्चपादिकायामेवावभासपदस्यावभास्यमानतापदेन तथा व्याख्यातत्वात् । जन्मान्तरीयसंस्कारोऽप्यध्यस्यमानतिक्तरसोत्पत्तौ हेतुः, प्रातिभासिकाध्यासस्थलेषु दोषसंस्काराधिष्ठानसामान्यज्ञानरूपकारणत्रयस्याध्यस्यमानपदार्थोत्पत्तावेव कारणताया टीकाविवरणादिष्वेव स्पष्टत्वात् । तथा च कथमनेन ग्रन्थेन स्वरूपतोऽध्यस्यमानस्यैव तिक्तरसस्यैन्द्रियिकत्वस्पष्टीकरणम् । न च तिक्तरसस्यैन्द्रियिकत्वाभावे रसनव्यापारापेक्षानुपपत्तिरिति वाच्यम् । बालस्यान्येषां वा तिक्तरसाध्यासकाले रसनेन्द्रियव्यापारसत्त्वे मानाभावात् । न च तथा सति तिक्ततानवभासप्रसङ्ग इति वाच्यम् । त्वगिन्द्रियजन्यमधुरद्रव्यगोचरवृत्त्याभिव्यक्ते मधुरद्रव्यावच्छिन्नचैतन्ये तिक्तताध्यासाङ्गीकारेण तिक्तताया स्वगोचरवृत्तिं विनैव स्वाधिष्ठानचैतन्यभास्यत्वसंभवात् । अस्तु वा तिक्तताध्यासस्थले रसनेन्द्रियापेक्षा । तथापि नाध्यस्यमानतिक्तरसस्यैन्द्रियिकत्वसिद्धिः, अध्यस्यमानतिक्ततां प्रति मधुरद्रव्यनिष्ठमधुररसस्याधिष्ठानत्वसंभवेन तदधिष्ठानभूतमधुररसग्रहणे तदपेक्षोपपत्तेः पञ्चपादिकागतमधुरपदस्य मधुररससाधारणत्वेन तद्विरोधाभावाच्च । न च मधुररसग्रहणे तिक्तताध्यासानुपपत्तिरिति वाच्यम् । रसग्रहणेऽपि दोषविशेषेण मधुररसत्वजातिसाक्षात्कारप्रतिबन्धे सति तत्तदध्यासो-

पेक्षानुपपत्तेः । तस्मादुदाहृतनैल्याध्यासस्थलेऽधिष्ठा-
नसंप्रयोगादेव तद्गोचरचाक्षुषवृत्तिसमकालोदयोऽध्या-
सस्तस्या वृत्तेर्विषय इति तस्य चाक्षुषत्वमभ्युपगन्त-
व्यम्, रूपं विना केवलाधिष्ठानगोचरवृत्त्यभावे च
विषयचैतन्याभिव्यक्त्यभावेन जलतदध्यस्तनैल्यादी-
नां तद्ग्राह्यत्वायोगात् । तिक्तरसाध्यासस्थले त्वधिष्ठा-

---

पपत्तेः । तस्मादारोप्यस्य साक्षिमात्रभास्यत्वं पूर्वाचार्याणां सार्व-
त्रिकव्यवहारसिद्धं निरपवादमिति मन्तव्यम् । इतःपरं कवितार्-
किकमतानुसारेण यत्पञ्चपादिकाग्रन्थव्याख्यानं कृतं तदेवानुव-
र्त्यते । तस्मादिति । अध्यस्यमानपदार्थस्य साक्षिभास्यत्वमते
पीतशङ्खाद्यध्यासेषु चक्षुरनुपयोगस्य दुष्परिहरत्वादित्यर्थः । तद्गो-
चरेति । अधिष्ठानगोचरेत्यर्थः । वृत्तिसमकालमुदयो यस्याध्या-
सस्य पीतरूपादेः स तथेत्यर्थः । अधिष्ठानसंप्रयोगजन्यया वृत्ते-
रारोपितरूपादिविशिष्टशङ्खादिविषयकत्वानङ्गीकारे आरोपितरू-
पादेरनवभासप्रसङ्ग इत्यर्थः । रूपं विना केवलाधिष्ठानगोचर-
वृत्त्यभावे चेति । आरोप्यपीतिमनैल्यादिसंसृष्टशङ्खादिगोचरवृत्त्य-
नभ्युपगमे चेति चकारार्थः । तत्पदं चैतन्यपरम् । पञ्चपादिका-
ग्रन्थोक्तं तिक्तरसस्याध्यस्यमानस्यैन्द्रियिकत्वं चाक्षुषाध्यासस्थल
इवाधिष्ठानारोप्ययोरेकवृत्तिविषयत्वेन न भवति, किं तु तिक्तरस-
मात्रगोचररासनवृत्त्येत्युपपादयति— तिक्तरसाध्यासस्थले त्वि-

